यौगन्धरायणः--कथमन्यद् रूपमिव मे संवृत्तम् ! हन्त भोः! गतोऽस्मि स्वामिसन्निकर्षमेव । इदानीं ममोपदेशार्थमिवोत्सृष्टाः ।

उन्मत्तसदृशो वेषो धारितस्तेन साधुना ।
मोचयिष्यति राजानं मां च प्रच्छादयिष्यति ॥ १७ ॥

( प्रविश्य )

प्रतीहारी--अय्य ! भट्टिमादा आह--इच्छामि मे पुत्तअं पेक्खिदुं ३ ति । [ आर्य ! भर्तृमाताह--इच्छामि मे पुत्रकं प्रेक्षितुमिति । ]

यौगन्धरायणः--अयमयमागच्छामि । आर्य ! शान्तिगृहे मां प्रतीक्षस्व ।

६ ब्राह्मणः--बाढम् । ( निष्क्रान्तः । )

यौगन्धरायणः--हंसक ! विश्रम्यतामिदानीम् ।

हंसकः--अय्य ! तह । ( निष्क्रान्तः । ) [ आर्य ! तथा । ]

९ यौगन्धरायणः--विजये ! गच्छाग्रतः ।

प्रतीहारी--अय्य ! तह । [ आर्य ! तथा । ]

यौगन्धरायणः--भोः !

काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति ॥ १८ ॥

( निष्क्रान्ताः । )

प्रथमोऽङ्कः ।

## अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति काञ्चुकीयः । )

३ काञ्चुकीयः—आभीरक ! आभीरक ! गच्छ महासेनवचनात् प्रतीहाररक्षके ब्रूहि—एष काशिराजोपाध्याय आर्यजैवन्तिरस्य दौत्येन प्राप्तः । अस्य सामान्यदूतसत्कारं पृष्ठतः कृत्वा सुखमिव

६ निवेद्यताम् । यथा चातिथिसत्कारं जानीयात् तथा प्रयतितव्यम् इति । भोः ! एवं नामाहन्यहनि गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते । न खलु महासेनः कञ्चिदपि

९ प्रत्याचष्टे, न चाप्यनुगृह्णाति । किन्नुखल्विदम् । अथवा दैवमत्र कन्याप्रदानेऽधिकृतम् । कुतः,

व्यक्तं न तावत् समुपैति तस्य दूतो वधूत्वे विहिता हि यस्य ।
ततो नरेन्द्रेषु गुणान् नरेन्द्रो न वेत्ति जानन्नपि तत्परीक्षः ॥ १ ॥

अये संलीयमानान्तःपुरचरः सनाथीभवत्ययं देशः । अये अयं महासेनः, य एषः,

दूर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः
पीताङ्गदैः परिगतैः परिपीवितांसः ।
अस्माद् घनात् कनकतालवनैकदेशा-
न्निर्धावितः शरवणादिव कार्त्तिकेयः ॥ २ ॥

( निष्क्रान्तः । )

विष्कम्भकः ।

१ ( ततः प्रविशति राजा सपरिवारः । )

राजा—

मम हयमनुगभिन्नं मार्गरेणुं नरेन्द्रा
मकुटतटविलग्नं भृत्यभूता वहन्ति ।

---

१ अन्यूनमान्यदूत०. २ पारिणीहितांसः. ३ निर्धावितः.

न च मम परितोषो यत्र मां वत्सराजः
प्रणमति गुणशाली कुञ्जरज्ञानदृप्तः ॥ ३ ॥

बादरायण !

( प्रविश्य ) काञ्चुकीयः–जयतु महासेनः ।

३ राजा–निवेशितो जैयन्तिः ।

काञ्चुकीयः–निवेशितोऽनुरूपतश्च सत्कृतः ।

राजा–न्याय्यं कृतं राजवंश्यगुणाभिलाषिणा । समागतानां युक्त

६ पूजया प्रतिग्रहः । अथ सर्वोऽपि कन्याप्रदानं प्रति पृष्टश्रेणृ परच्छ

न्देन तिष्ठति । ( काञ्चुकीयमवलोक्य ) बादरायण ! वक्तुकाममिव

त्वां लक्षये ।

९ काञ्चुकीयः–न खलु किञ्चित् । कन्याप्रदानं प्रति समुत्पन्नोऽभिमर्शः ।

राजा–अलमलं परिहृत्य । सर्वसाधारणो ह्येष विधिः । अभिधीयताम् ।

काञ्चुकीयः–महासेन ! एषा मे विवक्षा–एवं नामाहन्यहनि गोत्रानु·

१२ कूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते । न च

महासेनः कञ्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते । किन्तुख·

ल्विदमिति ।

१५ राजा–बादरायण ! एवमेतत् । अतिलोभाद् वरगुणानामतिस्नेहाच्च

वासवदत्तायां न शक्नोमि निश्चयं गन्तुम् ।

कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान् ।
ततो रूपे कान्तिं न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं न हि न परिपाल्या युवतयः ॥ ४ ॥

काञ्चुकीयः–महासेनं वर्जयित्वा न हीदानीमेते गुणाः क्वचिदेकस्था दृश्यन्ते ।

---

१ समासक्तप्रीतिकारणागतानाम्. २ वक्तुकाम इव.

२ राजा—अतः खलु चिन्त्यते ।

कन्याया वरसम्पत्तिः पितुः (प्रायः) प्रयत्नतः ।
भाग्येषु शेषमायत्तं दृष्टपूर्वं न चान्यथा ॥ ५ ॥

दुहितुः प्रदानकाले दुःखशीला हि मातरः । तस्माद् देवी तावदाहूयताम् ।

३ काञ्चुकीयः—यदाज्ञापयति महासेनः । ( निष्क्रान्तः । )

राजा—भोः ! काशिराजदूतसम्प्रेषणेन वत्सराजग्रहणार्थं गतं शालङ्कायनं प्रति गता मे बुद्धिः । किन्नु खल्वद्यापि वृत्तान्तं न
६ प्रेषयति स ब्राह्मणः ।

कामं या तस्य सा लीला तत्रैवानुगतं मनः ।
ये त्वस्य सचिवाः सर्वे यत्नमास्थाय ते स्थिताः ॥ ६ ॥

( ततः प्रविशति देवी सपरिवारा । )

देवी—जेदु महासेणो । [ जयतु महासेनः । ]

३ राजा—आस्यताम् ।

देवी—जं महासेणो आणवेदि । ( उपविशति । ) [ यन्महासेन आज्ञापयति । ]

६ राजा—वासवदत्ता क्व ।

देवी—उत्तराए वेदालिआए सआसे वीणं सिक्खिदुं णारदीअं गआ आसी । [ उत्तराया वैतालिक्याः सकाशे वीणां शिक्षितुं
९ नारदीयां गतासीत् । ]

राजा—कथमुत्पन्नोऽस्या गान्धर्वेऽभिलाषः ।

देवी—केण वि किळ उग्घादेण कञ्चणमाळं वीणाजोग्गं करअन्तिं
१२ पेक्खिअ सिक्खिदुकामा आसी । [ केनापि किलोद्घातेन काञ्चनमालां वीणायोग्यां कुर्वतीं प्रेक्ष्य शिक्षितुकामासीत् । ]

राजा—सदृशं बाल्यस्य ।

१५ देवी—महासेणं वि किं वि विण्णाविदुकामा म्हि । [ महासेनमपि किमपि विज्ञापयितुकामास्मि । ]

राजा—किमिति ।

१८ देवी—आअय्यं इच्छामि त्ति । [ आचार्यमिच्छामीति । ]

राजा—उपस्थितविवाहकालायाः किमिदानीमाचार्येण । पतिरेवैनां शिक्षयिष्यति ।

२१ देवी—हं एसो दाणि मे दारिआए कालो । [ हम् एष इदानीं मे दारिकायाः कालः । ]

राजा—भोः ! नियं प्रदीयतामित्यमातुपरुध्य किमिदानीं सन्तप्यसे ।

२४ देवी—अभिप्पेदं मे पदाणं । विओओ मं सन्तावेदि । अह कस्स उण दिण्णा । [ अभिप्रेतं मे प्रदानम् । वियोगो मां सन्तापयति । अथ कस्मै पुनर्दत्ता । ]

२७ राजा—न तावन्निश्चयो गम्यते ।

देवी—इदाणिं पि ण दाव । [ इदानीमपि न तावत् । ]

राजा—

> अदत्तेत्यागता लज्जा दत्तेति व्यथितं मनः ।
> धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः ॥ ७ ॥

सर्वथा श्वशुरपरिचरणसमर्थे वयसि वर्तते वासवदत्ता । एष चापरः काशिराजोपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तो विलोमयति मां

३ चारित्रेण । ( आत्मगतम् ) न किञ्चिदाह । अश्रुपूर्वा व्याकुला कथं निश्चयं गमिष्यति । भवतु, निवेदयाम्यस्यै । (प्रकाशम्) श्रूयन्तेऽस्मत्सम्बन्धप्रयोजनायागता राजानः ।

६ देवी—किं दाणि वित्थरेण । जहिं दइअ ण सन्तप्पामो, तहिं दीअदु । [ किमिदानीं विस्तरेण । यत्र दत्त्वा न सन्तप्यामहे, तत्र दीयताम् । ]

राजा—अहो महान् खलु स्नेहाभिहितो दुःखविस्तर इदानीं पश्चाद्

पालम्भनं श्रोतुम् । तस्माद् देवी तावन्निश्चयं गच्छतु । श्रूयताम्,

अस्मत्सम्बद्धो मागधः काशिराजो वाङ्गः सौराष्ट्रो मैथिलः शूरसेनः ।
एते नानार्थैर्लोभयन्ते गुणैर्मां कस्ते वैतेषां पात्रतां याति राजा ॥८॥

( प्रविश्य )

काञ्चुकीयः—वत्सराजः ।

३ राजा—किं वत्सराजः ।

काञ्चुकीयः—प्रसीदतु प्रसीदतु महासेनः । प्रियवचननिवेदनत्वरया क्रमविशेषो नावेक्षितः ।

६ राजा—प्रियवचनमिति ।

देवी—( उत्थाय ) जेदु महासेणो । [ जयतु महासेनः । ]

राजा—( सहर्षम् ) प्रियवचनपरिहार्या हि देवी । आस्यताम् ।

९ देवी—जं महासेणो आणवेदि । ( उपविशति । ) [ यद् महासेन आज्ञापयति । ]

राजा—उत्तिष्ठोत्तिष्ठ, स्वैरमभिधीयताम् ।

१२ काञ्चुकीयः—( उत्थाय ) तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

राजा—( सहर्षम् ) किमाह भवान् ।

१५ काञ्चुकीयः—तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

राजा—उदयनः ।

काञ्चुकीयः—अथ किम् ।

१८ राजा—शतानीकस्य पुत्रः ।

काञ्चुकीयः—दृढम् ।

राजा—सहस्रानीकस्य नप्ता ।

२१ काञ्चुकीयः—स एव ।

राजा—कौशाम्बीशः ।

काञ्चुकीयः—सुव्यक्तम् ।

२४ राजा—गान्धर्ववित्तकः ।

काञ्चुकीयः—एवं ब्रुवन्ति ।

*राजा*—वत्सराजो ननु ।

२७ काञ्चुकीयः—अथ किं, वत्सराजः ।

राजा—अथ किमुपरतो यौगन्धरायणः ।

काञ्चुकीयः—न खलु, कौशाम्ब्यां किल ।

३० राजा—यद्येवं, न गृहीतो वत्सराजः ।

काञ्चुकीयः—श्रद्धत्तां महासेनः ।

राजा—

न श्रद्दधाम्युदयनग्रहणं त्वयोक्तं
व्यावर्तनं करतलैरिव मन्दरस्य ।
यस्याहवेषु रिपवः कथयन्ति शौर्यं
यौगन्धरायणमतानि च न स्खलन्ति ॥ ९ ॥

काञ्चुकीयः—प्रसीदतु महासेनः । वृद्धोऽस्मि ब्राह्मणः खल्वहम् । न महासेनसमीपेऽनृतमभिहितपूर्वम् ।

३ राजा—आ अस्त्येतत् । अथ कः प्रियदूतः शालङ्कायनेन प्रेषितः ।

काञ्चुकीयः—न पुरुषः । जवातिशययुक्तेन खररथेन वत्सराजमग्रतः कृत्वा स्वयमेवामात्यः प्राप्तः ।

६ राजा—एवं प्राप्तः । हन्त भोः ! अद्य विमुक्तसन्नाहा सुखं विश्राम्यत्वक्षौहिणी । अद्यप्रभृति प्रच्छन्नकृतदूतसम्प्रेषणा अशङ्किताः स्वास्यन्ति राजानः । एष समासः—अद्यास्मि महासेनः ।

९ देवी—किं अमच्चेण आणीदो । [ किममात्येनानीतः । ]

राजा—अथ किम् ।

देवी—एदण्णिमित्तं कस्स पि ण दिस्सामो वासवदत्तं । [ एतन्निमित्तं कस्मा अपि न दिस्सामो वासवदत्ताम् । ]

१२

राजा–युद्धावजितशत्रुः खल्वेष मम । बादरायण ! शालङ्कायनः क्व ।
काञ्चुकीयः–आहितो भद्रद्वारे[1] ।
१५ राजा–गच्छ । भरतरोहकं ब्रूहि—कुमारविधिविशिष्टेन सत्कारेण वत्सराजमग्रतः कृत्वा प्रवेश्यतामिति ।
काञ्चुकीयः–यदाज्ञापयति महासेनः ।
१८ राजा–एहि तावत् ।
काञ्चुकीयः–अयमस्मि ।
राजा–वत्सराजदर्शने कश्चिन्नोत्सारयितव्यः ।

शत्रुं पश्यन्तु मे पौराः श्रुतपूर्वं स्वकर्मभिः ।
सिंहमन्तर्गतामर्षं यन्त्रार्थमिव संयतम् ॥ १० ॥

काञ्चुकीयः–यदाज्ञापयति महासेनः । ( निष्क्रान्तः । )
देवी–बहूणि अब्भुदआणि इमस्सिं राअउले अणुभूदाणि । ण खु
३ अहं ईदिसं पीदिजोग्गं महासेणस्स सुमरामि ।[बहवोऽभ्युदया अस्मिन् राजकुलेऽनुभूताः । न खल्वहमीदृशं प्रीतियोग्यं महासेनस्य स्मरामि । ]
राजा–अहमप्येतादृशं प्रीतिविशेषं न श्रुतपूर्वं स्मरामि, यथा गृहीतो
६ वत्सराज इति ।
देवी–वच्छराओ णं । [ वत्सराजो ननु । ]
राजा–अथ किम् ।
९ देवी–बहूणि सम्बन्धप्पओअणागदाणि राअउलाणि सुदाणि । एदिणा ण पेसिदपुरुवो पुरुसो । [ बहूनि सम्बन्धप्रयोजनागतानि राजकुलानि श्रुतानि । एतेन न प्रेषितपूर्वः पुरुषः । ]
१२ राजा–देवि ! महासेनशब्दमपि न गणयति, किं सम्बन्धमभिलपति ।
देवी–ण गणेदि । किं बालो अपण्डिदो वा । [न गणयति । किं बालः अपण्डितो वा । ]

[1] आरोपितो द्वारे.

१५ राजा–बाल[1], न त्वपण्डितः ।
देवी–किण्णुहु एणं उस्सेअअदि । [ किन्नुखल्वेनमुत्सेकयति । ]
राजा–उत्सेकयत्येनं प्रकाशराजर्षिनामधेयो वेदाक्षरसमवायप्रविष्टो
१८ भारतो वंशः । दर्पयत्येनं दायाद्यागतो गान्धर्वो वेदः । विभ्रमयत्येनं वयस्सहजं रूपम् । विस्रम्भयत्येनं कथमप्युत्पन्नोऽस्य पौरानुरागः ।
देवी–अभिलसणीआ वरगुणा । कस्स वामदाए दोसो संवुत्तो ।
२१ [ अभिलषणीया वरगुणाः । कस्य वामतया दोषः संवृत्तः । ]
राजा–देवि ! किमिदानीमस्थाने विस्मितासि । पश्य,

अग्निः कक्ष इवोत्सृष्टो दहन् कार्त्स्न्येन मेदिनीम् ।
अस्य मे शासनं दीप्तं विषयान्तेऽवसीदति ॥ ११ ॥

( प्रविश्य )

काञ्चुकीयः–जयतु महासेनः । यथाज्ञाप्रयुक्तसत्कारं प्रविष्टः शालङ्का-
३ यनः । स तु विज्ञापयति–इदं भरतकुलोपभुक्तं वत्सराजकुले द्रष्टव्यं घोषवती नाम वीणारत्नम् । महासेनः प्रतिग्राहयितव्य इति ।
( वीणां दर्शयति । )
६ राजा–प्रतिगृहीतं जयमङ्गलम् । ( वीणां गृहीत्वा ) इयं सा घोषवती नाम । यैषा,

श्रुतिसुखमधुरा स्वभावरक्ता करजमुखोल्लिखिताग्रघृष्टतन्त्री ।
ऋषिवचनगतेव मन्त्रविद्या गजहृदयानि बलाद् वशीकरोति ॥१२॥

भोः ! समरावजितानां रत्नानामिष्टसम्भोगः प्रीतिमुत्पादयति ।

अर्थशास्त्रगुणग्राही ज्येष्ठो गोपालकः सुतः ।
गान्धर्वद्वेषी व्यायामशाली चाप्यनुपालकः ॥ १३ ॥

कनुखल्वियं सुन्यस्ता भवेत् । देवि ! वासवदत्ता वीणामुपक्रान्ता ननु ।

---

१ प्रतिष्ठितः.	देवान्वयसमवायप्रविष्टो.

३ देवी–आम।
राजा–तेन हि इयमस्यै प्रदीयताम्।
देवी–वीणाप्पदाणेण मूओ वि उम्मत्ता विअ चिट्ठदि। [ वीणा-
६ प्रदानेन भूयोऽप्युन्मत्तेव तिष्ठति। ]
राजा–क्रीडतु क्रीडतु। नैतत् सुलभं श्वशुरकुले। बादरायण! क्व सा।
काञ्चुकीयः–अमात्येन सहोपविष्टा।
९ राजा–अथ वत्सेष्वधिकृतः।
काञ्चुकीयः–आहितविनयत्वात् पादयोरङ्के तस्य बहुप्रहारत्वाच्च स्कन्धवाहेन शयनीयेन मध्यमगृहे प्रवेशितः।
१२ राजा–हा धिग्, बहुप्रहारः। एष इदानीं निरुपस्कृतस्य तेजसो लोपः। नृशंसः खल्वस्मिन् काल उपेक्षितवान्। बादरायण! गच्छ। भरतरोहकं ब्रूहि—क्रियतामस्य व्रणप्रतिकर्मेति।
१५ काञ्चुकीयः–यदाज्ञापयति महासेनः।
राजा–अथवा एहि तावत्।
काञ्चुकीयः–अयमस्मि।
१८ राजा–अस्य सर्वदर्शनमविमुक्तसत्कारमवगन्तव्यम्। आकारसूचिता अस्य प्रीतयो विशेषाः। अतिक्रान्तविग्रहाश्रिताः कथा न कथयितव्याः। क्षुतादिप्रयोगेष्वाशिषोऽभिधेयाः। कालसंवादिना स्तवेनान्वयः।
२१ काञ्चुकीयः–यदाज्ञापयति महासेनः। ( निष्क्रम्य प्रविश्य ) जयतु महासेनः। पर्येष कृतव्रणप्रतिकर्मा वत्सराजः। अकालस्तावदिदानीं द्वितीयस्य प्रतिकर्मण इति। मध्याह्नमारोहति दिवाकरः।
२४ राजा–अथ कस्मिन् प्रदेशे धीरमानी।
काञ्चुकीयः–मयूरयष्टिमुखे।
राजा–हा धिग्, अनाश्रयणीयः खल्वयं देशः। आतपप्रतिकूल्यार्थं
२७ मणिभूमिकायां प्रवेशयेत्याज्ञापय।

काञ्चुकीयः–यदाज्ञापयति महासेनः । ( निष्क्रम्य प्रविश्य ) यदाज्ञप्तं महासेनेन, तत् सर्वमनुष्ठितम् । अमात्यस्तु भरतरोहको महासेनं
३० द्रष्टुमिच्छति ।
राजा–व्यक्तं न रोचते तस्मै वत्सराजसत्क्रिया । अस्यैव नीतेः परिश्रमः । अहमेवैनमनुनयामि ।
३३ देवी–किं सम्बन्धो णिच्छिदो । [ किं सम्बन्धो निश्चितः । ]
राजा–न तावन्निश्चयो गम्यते ।
देवी–अलं दाणि तुवरिअ । बाला मे दारिआ । [ अलमिदानीं
३६ त्वरित्वा । बाला मे दारिका । ]
राजा–यदभिरुचितं भवत्यै । प्रविशत्वभ्यन्तरम् ।
देवी–जं महासेणो आणवेदि । ( निष्क्रान्ता सपरिवारा । ) [ यन्महा-
३९ सेन आज्ञापयति । ]
राजा–( विचिन्त्य )
पूर्वं तावद् वैरमभ्यागतेऽपदानीतेऽभिमन् स्यात् तु मध्यस्थता मे ।
युद्धस्थितं संशयस्थं विपक्षं श्रुत्वा स्वेनं संशयं चिन्तयामि ॥ १४ ॥
( निष्क्रान्तौ । )
द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशति डिण्डिकवेषो विदूषकः । )

३ विदूषकः–( निरूप्य ) भो ! देवउलपीठिआए मम मोदअमल्लअं गिनिरसिअ दक्खिणामासआणि गमिअ बन्धिअ पडिणिवुत्तो दाणि मोदअमल्लअं ण पेक्खामि । ( विचिन्त्य ) आ एकमोद-
६ अपरितोसिदो ॥ दाव ओळग्गो मे अणुसरदि । उवदाए पाआरस्स अग्गे हुम्बुराणं । अस्सदभत्तदाए अळोहणीअं पडिआणं । आदु

अपि णं खाआमि । भोदु ओगाहइस्सं दाव अहं । हीं हीं वुद्धो
१ विअ सूअरवत्थी मुद्धवादं एव्व उग्गिरामि । अहव लोहिदकखा-
अणीए केरअं मम केरअं त्ति करिअ सिवेण पडिहत्थीकिदं भवे ।
( निरूप्य ) जदि वि एसो वम्हआरी बहुकेहिं रूवेहिं अविणअं
१२ करेदि । भोदु पेक्खिस्सं दाव अहं । भो ! एदं खु मम मोदअम-
ल्लअं सिवस्स पादमूले चिट्ठइ । जाव णं गह्णामि । देहि भट्टा !
देहि मे मोदअमल्लअं । भट्टा ! तुमं वि मम चोरो सि । अविहा
१५ आलिहिदं खु मम मोदअमल्लअं संदावतिमिरेण मुट्ठु ण पेक्खामि ।
भोदु पमज्जिस्सं दाव अहं । हीं हीं साहु ले चित्तअर ! साध !
साहु । जुत्तलेहदाए वण्णाणं जह जह पमज्जामि, तह तह उज्जलदरं
१८ होइ । भोदु, उदएण पमज्जिस्सं । कहिंणुहु उदअं । इदं सोहणं
मुहुत्तडाअं । अहं विअ सिवो वि दाव एक्कसिं मोदअमल्लए
णिरासो होदु । [ भोः ! देवकुलपीठिकायां मम मोदकमल्लकं निक्षिप्य
२१ दक्षिणामापकान् गणयित्वा बद्ध्वा प्रतिनिवृत्त इदानीं मोदकमल्लकं न
प्रेक्षे । भा मूकमोदकपरिलोपितो न तावद्यवल्ली यामनुसरति । उपनया
प्राकारस्यागतिः कुक्कुराणाम् । अक्षतभक्तनवालोभनीयं पथिकानाम् ।
२४ अथवा अप्येनं खादामि । भवतु उद्गरिष्यामि तावदहम् । ही ही वृद्ध
इव मूकरवस्तिः मुग्धवातमेवोद्गिरामि । अथवा लोहितकात्यायन्याः
सम्बन्धि मम सम्बन्धीति कृत्वा शिवेन प्रतिहस्तीकृतं भवेत् । यद्यप्येष
२७ ब्रह्मचारी बहुकै रूपैरविनयं करोति । भवतु प्रेक्षिष्ये तावदहम् । भोः !
एष खलु मम मोदकमल्लकः शिवस्य पादमूले तिष्ठति । यावद् एनं
गृह्णामि । देहि भर्तः ! देहि मे मोदकमल्लकम् । भर्तः ! त्वमपि मम
३० चोरोऽसि । अविधा आलिखितं खलु मम मोदकमल्लकं सन्तापतिमिरेण
सुष्ठु न प्रेक्षे । भवतु प्रमार्जिष्यामि तावदहम् । ही ही साधु रे चित्रकर !
साध ! साधु । युक्तलेखतया वर्णानां यथा यथा प्रमार्ज्मि, तथा तथो-

३३ उज्ज्वलतरं भवति । भवतु, उदकेन प्रमार्जिष्यामि । कुत्रनुखल्दकम् । इदं शोभनं शुष्कतटाकम् । अहमिव दिवोऽपि तावद् एतस्मिन् मोदकमल्लके निराशो भवतु । ]

३६ ( नेपथ्ये )

मोदआ ! मोदआ ! हहह । [ मोदकाः ! मोदकाः ! हहह । ]

विदूषकः–अविहा एसो उम्मत्तओ मम मोदअमल्लअं गह्णिअ

३९ हसमाणो फेणायमाणमलिणवरिसारच्छोदअं विअ इदो एव्व आहावदि । चिट्ठ चिट्ठ उम्मत्तअ ! चिट्ठ । इमिणा दण्डअट्ठेण सीसं दे भिन्दामि । [ अविधा एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा हसमानः फेनायमान-

४२ मलिनवर्षारथ्योदकमिवेत एवाधावति । तिष्ठ तिष्ठोन्मत्तक ! तिष्ठ । अनेन दण्डकाष्ठेन शीर्षं ते भिनद्मि । ]

( ततः प्रविशत्युन्मत्तकः । )

४५ उन्मत्तकः–मोदआ! मोदआ! हहह । [ मोदकाः ! मोदकाः ! हहह । ]

विदूषकः–भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । ]

४८ उन्मत्तकः–किं मोदआ । कहिं मोदआ । कस्स मोदआ । किं इमे मोदआ उज्झन्ति, आदु पिणज्झन्ति, उदाहो खज्जन्ति । [ किं मोदकाः । कुत्र मोदकाः । कस्य मोदकाः । किमिमे मोदका उज्झ्यन्ते,

५१ अथवा पिनह्यन्ते उताहो खाद्यन्ते । ]

विदूषकः–ण खज्जन्ति ण खज्जन्ति ण उज्झन्ति अ । [ न खाद्यन्ते न खाद्यन्ते नोज्झ्यन्ते च । ]

५४ उन्मत्तकः–एसा खु मम रसणा खादिदुकामा लिङ्गाणि करेदि । [ एषा खलु मम रसना खादितुकामा लिङ्गानि करोति । ]

विदूषकः–भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । मा परकेरए

५७ सिणेहं करिअ आवज्झेहि । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । मा परकीये स्नेहं कृत्वा अवबध्यस्व । ]

उन्मत्तकः—के के मं वज्झन्ति । मोदआ खु मं रक्खन्ति ।

णेवच्छविसेसमण्डिदा पीदिं उवदेदुं उवट्ठिआ ।
लाअगिहे दिण्णमुल्लिआ कालवसेण मुहुत्तदुव्वला ॥ १ ॥

[ के के मां बध्नन्ति । मोदकाः खलु मां रक्षन्ति ।
नेपथ्यविशेषमण्डिताः प्रीतिमुपदातुमुपस्थिताः ।
राजगृहे दत्तमूल्या कालवशेन मुहूर्तदुर्बलाः ॥ ]

विदूषकः—भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । इमिणा पच्चएण उवज्झाअउलं गन्तव्वं । [ भो उन्मत्तक ! आनय मम
३ मोदकमल्लकम् । अनेन प्रत्ययेनोपाध्यायकुलं गन्तव्यम् । ]

उन्मत्तकः—मए वि इमिणा पच्चएण जोअणसदं गन्तव्वं । [ मयाप्यनेन प्रत्ययेन योजनशतं गन्तव्यम् । ]

६ विदूषकः—किं एळावणे तुवं । [ किमैरावणस्त्वम् । ]

उन्मत्तकः—आम एळावणे अहं । ण हु दाव देवळाओ मं आशणं आलुहदि । शुदं च मया पादपाशिएहिं इन्दे वज्झ त्ति । धाराणि-
९ अळेहिं विज्जुम्मईहिं कशाहिं ताळिअ वाउब्भामेण परिब्भमन्तेण भिन्दीअदि मेहवन्धणं । [ आम ऐरावणोऽहम् । न खलु तावद् देवराजो मामासनमारोहति । श्रुतं च मया पादपाशिकैरिन्द्रो बद्ध इति ।
१२ धारानिगलैः विद्युन्मयीभिः कशाभिस्ताडयित्वा वातोद्भ्रमेण परिभ्रमता भिद्यते मेघबन्धनम् । ]

विदूषकः—भो उम्मत्तअ ! ण तुवं मम दइस्ससि, विळविस्सं दाव
१५ अहं । [ भो उन्मत्तक ! न त्वं मम दास्यसि, विलपिष्यामि तावदहम् । ]

उन्मत्तकः—विळव विळव विक्कोस वा विळव । [ विलप विलप विक्रोश वा विलप । ]

१८ विदूषकः—अव्वम्मण्णं भो ! अव्वम्मण्णं । [ अब्रह्मण्यं भोः ! अब्रह्मण्यम् । ]

उन्मत्तकः–अहं पि विळविस्सं । इन्दे वज्झे भो ! इन्दे वज्झे भो !
२१ [ अहमपि विलपिष्यामि । इन्द्रो बद्धो भोः ! इन्द्रो बद्धो भोः ! । ]
विदूषकः–अब्बम्मण्णं भो ! अब्बम्मण्णं । [ अब्रह्मण्यं भोः ! अब्रह्मण्यम् । ]

२४ ( नेपथ्ये )

मा भाआहि मा भाआहि बम्हणाउस ! मा भाआहि । [ मा बिभीहि मा बिभीहि ब्राह्मणोपासक ! मा बिभीहि । ]

२७ विदूषकः–( सदर्पम् ) आअदे चन्दे समाअदाणि सव्वणक्खत्ताणि । अअं बम्हणभावं । ईहामत्तएण समणएण अभअं दीअदि । [ आगते चन्द्रे समागतानि सर्वनक्षत्राणि । अयं ब्राह्मणभावः । ईहामात्रकेण ३० श्रमणकेनाभयं दीयते । ]

( ततः प्रविशति श्रमणकः । )

श्रमणकः–मा भाआहि मा भाआहि बम्हणाउस ! मा भाआहि ।
३३ के के इह, किं कय्यं, विलवन्दि । [ मा बिभीहि मा बिभीहि ब्राह्मणोपासक ! मा बिभीहि । के के इह, किं कार्यं, विलपन्ति । ]
विदूषकः–अविहा पडिहाररक्खअवुत्तिं खु समणओ अणुहोदि । भो
३६ समणअ ! भअवं ! एसो उम्मत्तओ मम मोदअमल्लअं गहणिअ ण देदि । [ अविधा प्रतिहाररक्षकवृत्तिं खलु श्रमणकोऽनुभवति । भो श्रमणक ! भगवन् ! एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा न ३९ ददाति । ]
श्रमणकः–मोदअं पेक्खामि दाव । [ मोदकं प्रेक्षे तावत् । ]
उन्मत्तकः–पेक्खदु पेक्खदु शमणअ ! भवं । [ प्रेक्षतां प्रेक्षतां श्रमणक !
४२ भवान् । ]
श्रमणकः–थु थु । [ थु थु । ]
विदूषकः–हद्धि उम्मत्तअस्स हत्थे ईहामत्तएण समणएण थुथूकिदा
४५ अधण्णस्स मम मोदआ दिट्ठपुरुवा एव्व संवुत्ता । [ हा धिग् उन्म

श्रमणकः—एदु एदु भवं । एदेहिं मोदएहिं मे सोत्थि वाअइस्सामि ।
[ एतु एतु भवान् । एतैर्मोदकैर्मां स्वस्ति वाचयिष्यामि । ]

७२ विदूषकः—ही ही ममकेरएहिं सोत्थि वाएमि । मए वि कोडुम्बिअस्स हत्थादो पडिग्गहगहीदाणि । ताणि भवदो वि उवाअणं भविस्सदि । सो वि समिद्धो होदु । एसो उम्मत्तओ अग्गिगिहं अहिमुहो
७५ गच्छइ । ठिदो मज्झह्णो । पुव्वह्णे वि दाव अअं देसो सुण्णो भविस्सदि । जाव अहं वि इमाणि दक्खिणामासओणि मग्गगेहे णिक्खिविअ गच्छामि । एक्कस्स शाडिआए कप्पं अवरस्स मुल्लेण ।
७८ [ हीही मदीयैः स्वस्ति वाचयामि । मयापि कौटुम्बिकस्य हस्तात् प्रतिग्रहगृहीतानि । तानि भवतोऽप्युपायनं भविष्यति । सोऽपि समृद्धो भवतु । एष उन्मत्तकोऽग्निगृहमभिमुखो गच्छति । स्थितो मध्याह्नः ।
८१ पूर्वाह्णेऽपि तावदयं देशः शून्यो भविष्यति । यावदहमपीमान् दक्षिणामाषकान् मार्गगेहे निक्षिप्य गच्छामि । एकस्य शाटिकया कार्यमपरस्य मूल्येन । ]

८४ ( सर्वे अग्निगृहं प्रविशन्ति । )

यौगन्धरायणः—वसन्तक ! शून्यमिदमग्निगृहम् ।
विदूषकः—आम भो ! सुण्णं खु इदं । [ आम भोः ! शून्यं खल्विदम् । ]
८७ यौगन्धरायणः—तेन हि परिष्वजेतां भवन्तौ ।
उभौ—बाढम् । ( परिष्वजेते )
यौगन्धरायणः—भवतु भवतु । तुल्यपरिश्रमौ भवन्तौ । आस्तां
९० भवान् । भवानप्यास्ताम् ।
उभौ—बाढम् ।

( सर्वे उपविष्टाः )

९३ यौगन्धरायणः—वसन्तक ! अपि दृष्टस्त्वया स्वामी ।
विदूषकः—आम भो ! दिट्ठो तत्तभवं । [ आम भोः ! दृष्टस्तत्रभवान् । ]

यौगन्धरायणः—हन्त भोः, अतिक्रान्तयोगक्षेमा रात्रिः। दिवस इदानीं प्रतिपाल्यते।

अहः समुत्तीर्य निशा प्रतीक्ष्यते शुभे प्रभाते दिवसोऽनुचिन्त्यते।
अनागतार्थान्यद्भूमानि पश्यतां गतं गतं कालमवेक्ष्य निर्वृतिः॥ २॥

रुमण्वान्—सम्यग् भवानाह। तुल्येऽपि कालविशेषे निशैव बहुदोषा बन्धनेषु। कुतः,

व्ययर्थैरप्यमाप्यानां लोके वा प्रतिरज्यताम्।
प्रभाते दृष्टदोषाणां वैरिणां रजनी भयम्॥ ३॥

यौगन्धरायणः—वसन्तक! स्वामिना सह कथितं ननु।

विदूषकः—आम भो! चिरं गच्छ च म्हि तत्तहोदा ओवज्झो। अज्ज चउद्दसीं ह्लाअमाणो पडिवालिदो अ। [आम भोः! चिरमेव चास्मि तत्रभवतावबद्धः। अद्य चतुर्दशीं स्नायमानः प्रतिपालितश्च।]

यौगन्धरायणः—स्नातः स्वामी।

विदूषकः—ण्हादो अत्तभवं। [स्नातोऽत्रभवान्।]

यौगन्धरायणः—कृतं देवकार्यम्।

विदूषकः—आम भो! पणाममत्तेण पूइदा देवदा। [आम भोः! प्रणाममात्रेण पूजिता देवताः।]

यौगन्धरायणः—गतामपि बहुमतामवस्थां प्राप्तः स्वामी। कुतः,

स्नातस्य यस्य समुपस्थितदैवतस्य
पुण्याहघोषविरमे पटहा नदन्ति।
तस्यैव कालविभवात् तिथिपूजनेषु
दैवप्रणामचलिता निगलाः स्वनन्ति॥ ४॥

रुमण्वान्—भवन इदानीं प्रयत्न उचितं तिथिसत्कारमानेष्यति स्वामिनः।

यौगन्धरायणः—न खलु तां प्रति समुत्पन्नाभिलाषः स्वामी ।

विदूषकः—भो ! मद्दआरिणो अणत्थ त्ति ईदिसं एव्व । [ भोः !

३६ मद्यचारिणोऽनर्था इतीदृशमेव ]

यौगन्धरायणः—सखे ! रुमण्वन् ! स्थिरीक्रियतामात्मा । अनेनैव धैर्येण जरा गन्तव्या ।

३९ विदूषकः—भो ! अहं च एदेण उत्तो—भणेहि जोअन्धराअणस्स जहसमत्थिदा समत्थणा ण रोअदे मे । समाणे गमणे पज्जोदस्स अवमाणविसेसो चिन्तीअदि । मा कामप्पधाण त्ति मं अवमण्णेहि ।

४२ अवमाणस्स अवजिदिं अण्णेसामि त्ति । [ भोः ! अहं चैतेनोक्तः—भण यौगन्धरायणाय यथासमर्थिता समर्थना न रोचते मे । समाने गमने प्रद्योतस्यापमानविशेषश्चिन्त्यते । मा कामप्रधान इति मामवम-

४५ न्यस्व अवमानस्यापचितिमन्विष्यामिति । ]

यौगन्धरायणः—अहो शत्रुजनापहास्यमभिधानम् । अहो निरपत्रपता खलु बुद्धेः । अहो सुहृज्जनसन्तापकारणम् । अदेशकाले ललितुं

४८ कामयते स्वामी । कुतः,

> शक्या दर्पयितुं स्वहस्तरचिता भूमिः कटप्रच्छदा
> पर्याप्तो निगलस्वनश्चरणयोः कन्दर्पमालम्बितुम् ।
> कः श्रुत्वा न भवेद्धि मन्मथपटुः प्रत्यक्षतो बन्धने
> रक्षार्थं परिगण्यमानपुरुषे राजेति शब्दापनम् ॥ ६ ॥

विदूषकः—भो ! दंसिदो सिणेहो । णिव्विट्ठो पुरुसआरो । साहु उज्झिअ णं गच्छामो । [ भोः ! दर्शितः स्नेहः । निर्विष्टः पुरुषकारः । साधूज्झि-

३ त्वैनं गच्छामः । ]

यौगन्धरायणः—वसन्तको भवान् ननु । वसन्तक ! मा मैवम् ।

> परित्यजाम सन्तप्तं दुःखेन मदनेन च ।
> सुहृज्जनमुपाश्रित्य यः काले नावबुध्यते ॥ ७ ॥

विदूषकः-एव्वं एव्व जरं गमिस्सामो । [एवमेव जरां गमिष्यामः ।]
यौगन्धरायणः-तन्नन् श्लाघ्यम् ।
३ विदूषकः-सिळाघणीओ भवे, जदि लोओ जाणादि । [श्लाघनीयं भवेद्, यदि लोको जानाति ।]
यौगन्धरायणः-न नः कार्यं लोकेन, स्वामिप्रियार्थोऽयमारम्भः ।
६ विदूषकः-सो वि दाव ण जाणादि । [सोऽपि तावन्न जानाति ।]
यौगन्धरायणः-काले ज्ञास्यति ।
विदूषकः-कदमो दाणिं सो कालो । [कतम इदानीं स कालः ।]
९ यौगन्धरायणः-यदेयमारम्भसिद्धिः ।
विदूषकः-तदो तादिसो भवं बन्धणादो राआणं अन्तेउरादो राअदारिअं उभे णिय्यावेदु । [ततस्तादृशो भवान् बन्धनाद्राजानमन्तःपुराद्राजदारिकामुभे निर्यातयतु ।]
१२
रुमण्वान्-इह भवता कृत्यम् ।
यौगन्धरायणः-उभयमिति । बाढम् । इयं द्वितीया प्रतिज्ञा—

सुभद्रामिव गाण्डीवी नागः पद्मलतामिव ।
यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥ ८ ॥

अपि च,

यदि तां चैव तं चैव तां चैवायतलोचनाम् ।
नाहरामि नृपं चैव नास्मि यौगन्धरायणः ॥ ९ ॥

(कर्णं दत्त्वा) अये शब्द इव । ज्ञायतां शब्दः ।
विदूषकः-भो ! तह । (निष्क्रम्य प्रविश्य) भो ! पडिउत्तदिवसविस्सम्भेण अविरळं सञ्चरन्तो जणो दीसइ । किं दाणिं करम्ह ।
३ [भोस्तथा । भोः ! परिवृत्तदिवसविश्रम्भेणाविरलं सञ्चरन् जनो दृश्यते । किमिदानीं कुर्मः ।]
६ रुमण्वान्-तेन हि चतुर्द्वारमभिगृह्य, भिद्यतां नः सङ्घातः ।

यौगन्धरायणः–न न। अभिन्नो नः सङ्घातः। भिद्यतामरिसङ्घातः।
स्वकार्यमनुष्ठीयताम्।

९ उभौ–तह। [ तथा ] ( निष्क्रान्तौ। )

उन्मत्तकः–ही ही चन्दं गिळदि ळाहू। मुञ्च मुञ्च चन्दं। यदि ण
मुञ्चेशि, मुहं दे पाडिअ मुञ्चावइश्शं। एशे एशे दुट्ठगद्दहे परिब्भमिअ
१२ आअच्छदि। एशे एशे चउप्पहवीहिआअं। जाव णं आलुहिअ
बलिं भक्खिश्शं। एशे एशे दाळअभट्टा! मं ताळेह। माखु माखु
मं ताळेह। किं भणाशि–अम्हाणं किं पि णचेहि त्ति। दक्खह
१५ दक्खह दाळअभट्टा! एशे दाळअभट्टा! पुणो वि मं ताळेह दण्डि-
आहि। माखु माखु ताळेह। तेण हि अहं पि तुम्हे ताळेमि।
[ ही ही चन्द्रं गिरति राहुः। मुञ्च मुञ्च चन्द्रम्। यदि न मुञ्चसि, मुखं
१८ ते पाटयित्वा मोचयिष्यामि। एष एष दुष्टगर्दभः परिभ्रम्य आगच्छति।
एष एष चतुष्पथवीथिकायाम्। यावदेनमारुह्य बलिं भक्षयिष्यामि।
एते एते दारकभर्तारः! मां ताडयत। माखलु माखलु मां ताडयत।
२१ किं भणथ–अस्माकं किमपि नृत्येति। पश्यत पश्यत दारकभर्तारः!।
एते दारकभर्तारः! पुनरपि मां ताडयथ यष्टिभिः। माखलु माखलु
ताडयत। तेन ह्यहमपि युष्मान् ताडयामि। ]

( निष्क्रान्तः। )

तृतीयोऽङ्कः।

---

## अथ चतुर्थोऽङ्कः।

( ततः प्रविशति भटः। )

३ भटः–को काळो अहं भट्टिदारिआए वासवदत्ताए उदए कीळिदु-
कामाए भद्दवदीपरिचारअं गत्तसेवअं ण पेक्खामि। भाव पुप्फदन्तअ!
गत्तसेवअं ण पेक्खासि। किं भणासि–एसो गत्तसेवओ कण्डिळसु-
६ ण्डिगिणीए गेहं पविसिअ सुरं पिबदि त्ति। गच्छदु भावो। (परिक्रम्य)

[ क इदानीमेषोऽत्र राजमार्गे गात्रसेवक! गात्रसेवक! इति मां शब्दापयति। पानागाराद्विष्क्रान्तो दृष्टोऽस्मि मम श्वशुरेण सुरष्टेन। अमृत-
६ मल्लकेन घृतमरिचलवणरूपितो मांसखण्डो मुखे प्रक्षिप्तश्च। स्नुषा रज्यति पीता यदि। श्वश्रूर्मे नु दण्डोद्यता भवति।

धन्याः सुराभिर्मत्ता धन्याः सुराभिरनुलिप्ताः।
धन्याः सुराभिः स्नाता धन्याः सुराभिः संज्ञापिताः ॥ १ ॥

अधन्या आत्मनः पुत्रदाराणां कष्टं पिष्टं भुञ्जन्तो ये मृता नराः सुगन्धाः सुरातटाकं न योजयन्ति। मत्तो जाने यमलोके वा नरकोऽ-
३ स्ति नास्ति च। ]

भटः—( उपसृत्य ) भो गत्तसेवअ! को कालो तुमं अण्णेसामि। भट्टिदारिआए वासवदत्ताए उदए कीळिदुकामाए भद्दवदी ण
६ दिस्सदि। तुमं दाव मत्तो एत्थ आहिण्डसि।

[ भो गात्रसेवक! कः कालस्त्वामन्विष्यामि। भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवती न दृश्यते। त्वं तावन्मत्तोऽत्राहिण्डसे। ]

९ गात्रसेवकः—जुज्जइ। सा अ णं मत्ता, सो पुरुसो वि मत्तो, अहं वि मत्तो, तुमं वि मत्तो, सव्वं मत्तमअं होइ।

[ युज्यते। सा च ननु मत्ता, स पुरुषोऽपि मत्तोऽहमपि मत्तः, त्वमपि
१२ मत्तः, सर्वं मत्तमयं भवति। ]

भटः—सव्वं दाव चिट्ठदु। राअउले भद्दपीठिअं णिक्कमिअ कुदो अअं आहिण्डदि त्ति।[1]

१५ [ सर्वं तावत् तिष्ठतु। राजकुले भद्रपीठिकां निष्क्राम्य कुतोऽयमाहिण्डत इति। ]

गात्रसेवकः—इदो आहिण्डामि, एत्थ पिबामि, मदेण पिबामि, मा
१८ संरम्भेण। किं करीअदु।

---

१ भद्दपीठिआ ण णिक्कमदि। कुदो अअं पिबामि.

[ इत आहिण्डे, अत्र पिबामि, एतेन पिबामि, मा संरम्भेण। किं क्रियताम्। ]

६ भटः–हिलज असम्बन्धप्पळावो। सिग्घं भट्टवर्दि पवेसेहि।
[ भवाचसम्बन्धप्रलापः। शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः–पविसदु पविसदु भट्टवदी। अंघो मए भट्टवदीए
४ अड्डुसं आढत्ते। [ प्रविशतु प्रविशतु भद्रवती। अहो मया भद्रवत्या अङ्कुशमाहितम्। ]

भटः–सभावविणीदाए भट्टवदीए अड्डुसेण किं कय्यं। गच्छ,
(७ सिग्घं भट्टवर्दि पवेसेहि [ स्वभावविनीताया भद्रवत्या अङ्कुशेन किं कार्यम्। गच्छ, शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः–पविसदु पविसदु भट्टवदी। अंघो मए भट्टवदीए
१० खुरप्पमाळा आढत्ता। [ प्रविशतु प्रविशतु भद्रवती। अहो मया भद्रवत्याः क्षुरप्रमालाहिता। ]

भटः–पुप्फवन्धिआए भट्टवदीय खुरप्पमाळाए किं कय्यं। सिग्घं
१३ भट्टवर्दि पवेसेहि। [पुष्पबन्ध्याया भद्रवत्याः क्षुरप्रमालया किं कार्यम्। शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः–पविसदु पविसदु भट्टवदी। अंघो मए भट्टवदीए
१६ घण्टा आढत्ता! [ प्रविशतु प्रविशतु भद्रवती। अहो मया भद्रवत्या घण्टाहिता। ]

भटः–उदए कीळिदुकामाए भट्टवदीए घण्टाए किं कय्यं। सिग्घं
१९ भट्टवर्दि पवेसेहि। [ उदके क्रीडितुकामाया भद्रवत्या घण्टया किं कार्यम्। शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः–पविसदु पविसदु भट्टवदी। अंघो मए भट्टवदीए
४२ कसिआ आढत्ते। [प्रविशतु प्रविशतु भद्रवती। अहो मया भद्रवत्याः कशिका आहिता। ]

भटः—कमिण्ण किं कय्यं । सिग्घं भट्टवदिं पवेसेहि । [ कशिकया,
४५ किं कार्यम् । शीघ्रं भट्टवतीं प्रवेशय । ]
गात्रसेवकः—पविसदु पविसदु भट्टवदी । अंघो । [ प्रविशतु प्रविशतु भट्टवती । अहो । ]
४८ भटः—किं अंघो । [ किम् अहो । ]
गात्रसेवकः—अंघो मए । [ अहो मया । ]
भटः—किं तुए । [ किं त्वया । ]
५१ गात्रसेवकः—अंघो भट्ट । [ अहो भट्ट । ]
भटः—किं भट्टत्ति । [ किं भट्टेति । ]
गात्रसेवकः—अंघो भट्टवदी । [ अहो भट्टवती । ]
५४ भटः—किं भट्टवदी । [ किं भट्टवती । ]
गात्रसेवकः—भट्टवदी मि आरुत्ता । [ भट्टवत्यप्यारिता । ]
भटः—ण तुवं एत्थ अवरद्धो । कण्डिलमुण्डिकिणी खु अवरद्धा, जा
५७ राअवाहणं गह्णिअ सुरं देदि । [ न त्वमत्रापराद्धः कण्डिलमौण्डिकी खल्वपराद्धा, या राजवाहनं गृहीत्वा सुरां ददाति । ]
गात्रसेवकः—अंघो मए उत्तं—मा मूळविद्धिं विणासेहि त्ति ।
६० [ अहो मयोक्तम्—मा मूलवृद्धिं विनाशयेति । ]
भटः—ई सद्दो विअ । [ ई शब्द इव । ]
गात्रसेवकः—अंघो जाणामि जाणामि, कण्डिलमुण्डिकिणीए गेहं
६३ भिन्दिअ भट्टवदी पळाअदि । [ अहो जानामि जानामि, कण्डिलमौण्डिक्या गेहं भित्त्वा भट्टवती पलायते । ]
भटः—किं भणासि—( आकाशे ) एसो भट्टा वच्छराओ वासवदत्तं
६६ गह्णिअ णिग्गदो त्ति । [ किं भणसि—एष भर्ता वत्सराजो वासवदत्तां गृहीत्वा निर्गत इति । ]
गात्रसेवकः—( सहर्षम् ) अविघ्नमस्तु स्वामिनः ।

१ भटः—पिअ पिअ । अज्ज वि तुमं मत्तो आहिण्डेहि । [ पिब पिब । अद्यापि त्वं मत्त आहिण्डस्व । ]

गात्रसेवकः—आः को मत्तः, कस्य वा मदः, वयं खल्वार्ययौगन्ध-
२ रायणेन स्वेषु स्वेषु स्थानेषु स्थापिताश्चारपुरुषाः । यावदहमपि सुहृज्जनस्य संज्ञां करोमि । एते ते सुहृदो निर्मोकमुक्ता इव कृष्ण-सर्पा इतस्ततो निर्धावन्ति । भो भोः सुहृदः ! शृण्वन्तु शृण्वन्तु
१५ भवन्तः—

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥२॥

क्व नु खल्वार्ययौगन्धरायणः । (विलोक्य) अये अयमत्रभवान् आर्य-यौगन्धरायणः । य एषः,

निशितविमलखड्गः संहृतोन्मत्तवेषः
कनकखचितचर्मव्यग्रवामाग्रहस्तः ।
विरचितबहुचीरः पाण्डरात्तद्धपट्टः
सतडिदिव पयोदः किञ्चिदुद्दीर्णचन्द्रः ॥ ३ ॥

अहो महत् प्रवृत्तं युद्धम् ।

हत्वा गजान् सगजिनः सहयांश्च योधा-
नग्राहिणीमतिविगाह्य बलान्मुहूर्तम् ।
नागेन्द्रदन्तमुसलाहतभग्नबाहु-
र्भ्रष्टायुधोऽपि ननिवृत्तपदोऽभियातः ॥ ४ ॥

हा धिक्, ग्रहणमुपगतः खल्वार्ययौगन्धरायणः । यावदहमप्यार्य-यौगन्धरायणस्य प्रत्यन्तरीभविष्यामि । ( निष्क्रान्तः । )

---

१ अहो प्रतिभयमिदं युद्धम् । अहो महत्प्रतिभयं प्रवृत्तमिदं युद्धम्.

३ भटः—किण्णुखु एदं । पाआरतोरणवज्जं सव्वं कोसम्बी खु इदं । होदु, इमं वुत्तन्तं अमच्चस्स निवेदेमि । [ किन्नुखल्वेतत् । प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्विदम् । भवत्विमं वृत्तान्तममात्याय
६ निवेदयामि । ]

( निष्क्रान्तः । )

## प्रवेशकः ।

९ ( ततः प्रविशतः साधारणौ । )

उभौ—उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत । ]

१२ प्रथमः—अंघो कण्ठस्स दीअमाणस्स ण उद्धं विरमदि । [ अहो कण्ठस्य दीर्यमाणस्य नोर्ध्वं विरमति । ].

द्वितीयः—अंघो भट्टिदारिआए वासवदत्ताए अवणअणविब्भमदाए
१५ विरुवन्तस्स मे वअणं कोवि ण सुणादि । अंघो किं भणह—किंणिमित्तं उस्सारणा वत्तदि त्ति । गहीदो अय्यजोअन्धराअणो । किं भणह—कहं गहीद त्ति । सुणन्तु अय्या । अय्यजोअन्धराअणेण
१८ असिदुदीआए अक्खोहिणीए अग्गवेगो मुहुत्तअं धारिदो । विजयसुन्दरस्स हत्थिणो दन्तान्तचोदिदो असी विवण्णो । असिदोसेण गहीदो, ण पुरुसदोसेण । [ अहो भर्तृदारिकाया वासवदत्ताया अप-
२१ नयनविभ्रमतया विरुवतो मे वचनं कश्चिन्न शृणोति । अहो किं भणथ—किंनिमित्तमुत्सारणा वर्तत इति । गृहीत आर्ययौगन्धरायणः । किं भणथ—कथं गृहीत इति । शृण्वन्त्वार्याः । आर्ययौगन्धरायणेनासिद्वितीयेनाक्षौ-
२४ हिण्या अग्रवेगो मुहूर्तं धारितः । विजयसुन्दरस्य हस्तिनो दन्तान्तचोदितोऽसिर्विपन्नः । असिदोषेण गृहीतो, न पुरुषदोषेण । ]

प्रथमः—अंघो अप्पमत्ता होह तुम्हे । पाआरतोरणवज्जं सव्वं
२७ कोसम्बी खु इअं । [ अहो अप्रमत्ता भवत यूयम् । प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्वियम् । ]

उभौ–ओदरदु ओदरदु अय्यो ओदरदु।

१० [ अवतरत्ववतरत्वार्योऽवतरतु। ]

( ततः प्रविशति यौगन्धरायणः बद्धबाहुः फलकद्वयेनेनानीयमानः। )

यौगन्धरायणः–अयमहमवतरामि।

रिपुगनमपनीय वत्सराजं ग्रहणमुपेत्य रणे स्वशस्त्रदोषात्।
अयमहमपनीतभर्तृदुःखो जितमिति राजकुले सुखं विशामि ॥ ५ ॥

भोः! सुखं खलु निष्कलत्राणां कान्तारप्रवेशः, रमणीयतरः खलु प्राप्तमनोरथानां विनिपातः, अपश्चात्तापकरः खलु सञ्चितधर्माणां मृत्युः। मया हि,

वैरं भयं परिभयं च समं विहाय
कृत्वा नयैश्च विनयैश्च शरैश्च कर्म।
शत्रोः श्रियं च सुहृदामयशश्च हित्वा
प्राप्तो जयश्च नृपतिश्च महांश्च शब्दः ॥ ६ ॥

उभौ–उस्सरह उस्सरह अय्या! उस्सरह। [ उत्सरतोत्सरतार्याः! उत्सरत। ]

यौगन्धरायणः–मद्दर्शनाभिलाषी जनो न कश्चिदुत्सारयितव्यः।

पश्यन्तु मां नरपतेः पुरुषाः ससत्त्वा
राजानुरागनियमेन विपद्यमानम्।
ये प्रार्थयन्ति च मनोभिरमात्यशब्दं
तेषां स्थिरीभवतु नश्यतु वाभिलाषः ॥ ७ ॥

उभौ–उस्सरह उस्सरह। किं तुम्हेहिं ण दिट्ठपुरुवो अय्यजोअन्धराअणो! [ उत्सरतोत्सरत। किं युष्माभिर्न दृष्टपूर्व आर्ययौगन्धरायणः। ]

यौगन्धरायणः– दृष्टः पूर्वं, न त्वेवम्। मम हि,

उन्मत्तच्छन्नवेषस्य रथ्यासु परिधावतः ।
अवगीतमिदं रूपं कर्म सम्प्रति दृश्यते ॥ ८ ॥

( प्रविश्य )

भटः—अय्य ! पिअं दे णिवेदेमि । गहीदो किल वच्छराओ
३ [आर्य ! प्रियं ते निवेदयामि । गृहीतः किल वत्सराजः ।]

यौगन्धरायणः—नैतदस्ति ।

चिरमरिनगरे निरोधमुक्तः स किल वनान्युपलभ्य भद्रवत्या ।
प्रहृतमुपगमिष्यति प्रयातो निमिषितमात्रगतेषु योजनेषु ॥ ९

भद्र ! कथं गृहीत इति श्रुतम् ।

भटः—अणुसारिअ णळागिरिणा गहीदो किळ । [ अनुसार्य नला
३ गिरिणा गृहीतः किल । ]

यौगन्धरायणः—अस्ति वाहनसामर्थ्यम् । असमायुक्तस्तु नः ।

गजस्याधोरणायुक्तो जवो भवति शिक्षया ।
विमुक्तं वत्सराजेन क एनं वाहयिष्यति ॥ १० ॥

भटः—अय्य ! अमच्चो आह—आउहागारे चिट्ठदु किळ अय्यो
पुरुसगुत्तो अअं देसो त्ति । [ आर्य ! अमात्य आह—आयुधागारे
३ तिष्ठतु किलार्यः । पुरुषगुप्तोऽयं देश इति । ]

यौगन्धरायणः—अहो हास्यमभिधानम् ।

अग्निं वद्ध्वा वत्सराजाभिधाने यस्मिन् काले सर्वतो रक्षितव्यम् ।
तस्मिन् काले सुप्तमासीदमात्यैर्नीते रत्ने भाजने को निरोधः ॥११॥

( परिक्रम्य )

भटः—इदं आउहागारं । पविसदु अय्यो । [ इदमायुधागारम् ।
३ प्रविशत्वार्यः । ]

( प्रविश्य ) भटः—अमच्चो आह—अवणीअदु बन्धणं त्ति ।
[ अमात्य आह—अपनीयतां बन्धनमिति । ]

यौगन्धरायणः—आकीर्णं मां कुरु। व्यक्तं भरतरोहको मां द्रष्टुमिच्छति। अहमपि तावद् भरतरोहकं द्रष्टुमिच्छामि।

मद्वाक्यैः परिखिद्यमानहृदयं रोषान् प्रमत्ताक्षरैः
प्रारब्धेषु नयच्छलेषु तुलितं तुल्याधिकारोज्झितम्।
सूक्तैः शास्त्रविनिश्चितैर्विरहितं बुद्ध्याधिकं वञ्चितं
द्रष्टुं मत्प्रणयक्रियाविनिहतं व्रीडादिवाधोमुखम्॥ १२॥

(ततः प्रविशति भरतरोहकः।)

भरतरोहकः—क्वासौ क्वासौ यौगन्धरायणः।

अयसिननिजकार्ये यत्नैर्दुर्निरीक्ष्यं
कथमिव परिभाषे भर्तुरर्थे विपन्नम्॥
चिरमवनतकार्यं चापि निर्युक्तमन्त्रं
भुजगमिव सरोषं धर्षितं चोच्छ्रितं च॥ १३॥

भटः—अय्यजोअन्धराअणो अय्यं पडिवालअन्तो आउहागारे चिट्ठइ। [आर्ययौगन्धरायण आर्यं प्रतिपालयन् आयुधागारे तिष्ठति।]

[1] भरतरोहकः—भवतु भवतु।

मन्त्रित्वे वञ्चितो ह्येष सत्याजे नीलहस्तिना।
मत्यादेष्टुं स तद्वैरं मामिदानीं प्रतीक्षते॥ १४॥

भटः—अय्य! एसो अमच्चो। [आर्य! एषोऽमात्यः।]

भरतरोहकः—(उपगम्य) भो यौगन्धरायण!।

[2] यौगन्धरायणः—भोः!।

भटः—अहो सरस्स गम्भीरदा। अय्यस्स एक्कक्खरेण पूरिदो अयं देसो। [अहो स्वरस्य गाम्भीरता। आर्यस्यैकाक्षरेण पूरितोऽयं देशः।]

---

१ °नृप°.

२ 'भुपनत°.

भरतरोहकः—( उपविश्य ) भोः ! यौगन्धरायणशरीराण्यक्षराणि श्रूयन्ते । दिष्ट्या भवान् दृश्यते ।

यौगन्धरायणः—दिष्ट्या भवान् दृश्यत इति । पश्यतु भवान् माम्,

एवं रुधिरदिग्धाङ्गं वैरं नियममास्थितम् ।
गुरोरवजिते हत्वा शान्तं द्रौणिमिव स्थितम् ॥ १५ ॥

भरतरोहकः—अहो छलेनागतगजारम्भस्यात्मसम्भावना ।

यौगन्धरायणः—किं छलेनेति । तत् पुनरिदानीं युक्तम् ।

या सा मल्लिकसालवृक्षरचिता नागाश्रिता वञ्चना
बद्धः सेवितवान् हि नो नरपतिर्ग्रामप्रधानां क्षितिम् ।
राज्ञो वारणनिग्रहे परिचयाद् वीणाश्रिता वञ्चना
पूर्वं प्रस्तुतमेव यामि भवता नैवापराधो मम ॥ १६ ॥

भरतरोहकः—भो यौगन्धरायण ! यदभिमाक्षिकं महासेनस्य दुहितरं शिष्यां प्रतिगृह्य अद्भाषनयनं कृतं, युक्तेयं भोस्तस्करप्रवृत्तिः ।

यौगन्धरायणः—मा मा भवानेवम् । विवाहः खल्वेव स्वामिनः ।

भारतानां कुले जातो वत्सानामूर्जितः पतिः ।
अकृत्वा दारनिर्देशमुपदेशं करिष्यति ॥ १७ ॥

भरतरोहकः—अद्यापि महासेनेन प्रयुक्तसत्कारो वत्सराजः । तदिदानीं किं नावेक्षते ।

यौगन्धरायणः—मा मा भवानेवम् ।

यदस्य चाज्ञां कुरुते नलागिरिः स शिक्षितानां वचनेषु तिष्ठति ।
ततो विमुक्तः स्वशरीररक्षणे यशः प्रदातुं सुहृदां च जीवितम् ॥ १८ ॥

भरतरोहकः—यद्येवं, नलागिरिग्रहणार्थं विमुक्तश्चेद्, न पुनर्बद्धस्ते स्वामी ।

---

१. नैवात्र दोषो मम.

यौगन्धरायणः—नेति पश्यत्युपक्रोशभयात्।

भरतरोहकः—अपरोक्षराज्यव्यवहारो भवानिति ब्रवीति। समरावजितेषु शत्रुषु किमाह शास्त्रम्।

यौगन्धरायणः—वधः।

भरतरोहकः—वधार्हो वत्सराजश्चेत् किमस्माभिः स सत्कृतः।

यौगन्धरायणः—एतदवेक्ष्य खलु यदस्य शरीरं नापहृतम्।

भरतरोहकः—एतदपि सम्भाव्यं मन्यते स्वामी।

यौगन्धरायणः—कः संशयः।

हस्तप्राप्तो हि यो राजा रक्षितस्तेन साधुना।
न ह्यनारुह्य नागेन्द्रं वैजयन्ती निपात्यते ॥ १९ ॥

भरतरोहकः—भवतु भवतु। महासेनस्य प्रतिकूलं कृत्वा कौशाम्बीं प्रति का कृता ते बुद्धिः।

यौगन्धरायणः—अहो हास्यमभिधानम्।

भवतां चामतो यातः शेषकार्येषु का कथा।
समूलं वृक्षमुत्पाट्य शाखाश्छेत्तुं कुतः श्रमः ॥ २० ॥

(प्रविश्य)

काञ्चुकीयः—(कर्णे) एवमिव।

भरतरोहकः—प्रकाशमुच्यताम्।

काञ्चुकीयः—

कारणैर्बहुभिर्युक्तैः कामं नापहृतं त्वया।
गुणेषु न तु मे द्वेषो भृङ्गारः प्रतिगृह्यताम् ॥ २१ ॥

इति।

यौगन्धरायणः—हा धिक्।

गृहा न निर्वान्ति मया प्रदीपितास्तथैव तावद्धृदयानि मन्त्रिणाम्।
इयं तु पूजा मम दण्डधारिणः कृतापराधस्य हि सत्कृतिर्वधः ॥ २२ ॥

(नेपथ्ये हाहाकारः क्रियते।)

## पात्राणि ।

पुरुषाः—

राजा—कुरङ्ग्याः पिता कुन्तिभोजः ।
कौञ्जायनः—
भूतिकः— } कुन्तिभोजस्यामात्यौ ।
भटः—कुन्तिभोजस्य प्रतिहारो जयसेननामा ।
अविमारकः—सौवीरराजसूनुः ।
विदूषकः—अविमारकस्य वयस्यः संतुष्टनामा ।
सौवीरराजः—अविमारकस्य पिता ।
नारदः—देवर्षिः ।
विद्याधरः—अविमारकस्याङ्गुलीयकप्रदाता ।

स्त्रियः—

देवी—कुन्तिभोजस्य महिषी ।
कुरङ्गी—कुन्तिभोजदुहिता ।
सुदर्शना—अविमारकस्य जननी काशिराजमहिषी ।
प्रतिहारी—कुन्तिभोजस्य द्वारपालिका ।
चेटी—कुरङ्ग्याः किङ्करी नलिनिकाख्या ।
धात्री—कुरङ्ग्या उपमाता जयदा नाम ।
नलिनिका—
मागधिका— } कुरङ्ग्याः परिजनः ।
विलासिनी—
वसुमित्रा—
हरिणिका— } देव्याश्चेट्यौ ।
सौदामिनी—विद्याधरस्य प्रियतमा ।

### Errata

| Page | Act, verse, line | Incorrect | Correct |
|---|---|---|---|
| [illegible] | ii.⁴⁷ | ०र्थंत्रश्च | ०र्थंस्त्रश्च |
| | ii. 6²³ | अवकासे | अवकाशे |
| ,, | ¹⁹ | योग | योगं |
| | IV. 2¹ | तथापि | तथापि |
| 163. | V.³⁰ | ०धिकस्वभावं | ०धिकस्वभावं |
| 175. | VI.⁶⁵ | आंवा | आवां |

श्रीगणेशाय नमः।

महाकविश्रीभासप्रणीतम्

# अविमारकम्।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः। )

सूत्रधारः—

बलिश्रवां सानुकम्पं सलिलनिधिजलादेकदंष्ट्राग्रलग्ना-
  भाराक्रान्तामराजिमध्ये निहतदितिसुतामेकपादावधूताम्।
सम्भुक्तां प्रीतिपूर्वं स्वभुजवशगतामेकचक्राभिगुप्तां
  श्रीमान् नारायणस्ते प्रदिशतु वसुधामुच्छ्रितैकातपत्राम् ॥ १ ॥

( नेपथ्याभिमुखमवलोक्य ) आर्ये! इतस्तावत्।

( प्रविश्य )

३ नटी—अय्य! इअम्हि। [ आर्य! इयमस्मि। ]

सूत्रधारः—आर्ये! तव वदनजनितकौतूहलेन स्मितेन निवेदित इवा-न्तर्गतो भावः। ननु किञ्चिद् वक्तुकामासि।

६ नटी—को णत्थ विम्हओ अय्यो भावण्णो त्ति। [ कोऽत्र विस्मयः, आर्यो भावज्ञ इति। ]

सूत्रधारः—तेन हि स्वैरमभिधीयताम्।

९ नटी—इच्छेमि अय्येण सह उय्याणं गन्तुं। अत्थि मे तहिं इत्थि आचरणीअं णिअमकय्यं। [ इच्छाम्यार्येण सहोद्यानं गन्तुम्। अस्ति मे तत्र स्त्रीकरणीय नियमकार्यम्। ]

१२ ( नेपथ्ये )

भूतिक! त्वमप्युद्यानं गच्छ पुरस्त्रीरक्षणार्थम्। मद्भावस्थो ह्यङ्गनाभिः।

१५ सूत्रधारः—आर्ये ! ननु भवत्या श्रुतम्—उद्यानं गता राजपुत्रीति।
तस्मान् सम्प्रति सर्वतः परिगुप्तानि भवन्त्युद्यानानि। प्रतिनिवृत्तायां
राजसुतायां स्वैरं गमिष्यावः।

१८ नटी—जं अय्यो आणवेदि। [ यदार्य आज्ञापयति। ]

( निष्क्रान्तौ )

स्थापना।

---

( ततः प्रविशति राजा सपरिवारः )

राजा—

इष्टा मखा द्विजवराश्च मयि प्रसन्नाः
प्रज्ञापिता भयरसं समदा नरेन्द्राः।
एवंविधस्य च न मेऽस्ति मनःप्रहर्षः
कन्यापितुर्हि सततं बहु चिन्तनीयम् ॥ २ ॥

केतुमति ! गच्छ देवीमानय।

प्रतिहारी—जं भट्टा आणवेदि। [ यद् भर्ताज्ञापयति। ] ( निष्क्रान्ता

३ ( ततः प्रविशति सपरिवारा देवी )

देवी—जेदु महाराओ। [ जयतु महाराजः। ]

राजा—देवि ! नित्यप्रसन्नमपि ते मुखमद्यातिप्रसन्नमिव। किङ्कृतो

६ ऽयं प्रहर्षः।

देवी—णं महाराएण कहिदं—कुरङ्गीणिमित्तं दूदो आअदोत्ति।
अइरेण जामादुअं पेक्खामि त्ति। [ ननु महाराजेन कथितं—कुर

९ ङ्गीनिमित्तं दूत आगत इति। तदचिरेण जामातरं प्रेक्ष इति। ]

राजा—तादृशमप्यस्ति। न तु तावन् क्रियते निश्चयः। एह्युपविश।

देवी—जं महाराओ आणवेदि। [ यद् महाराज आज्ञापयति। ]

१२ (उपविशति।)

राजा–देवि ! विवाहा नाम बहुशः परीक्ष्य कर्तव्या भवन्ति । कुतः,

जामातृसम्पत्तिमचिन्तयित्वा
पित्रा तु दत्ता स्वमनोभिलाषात् ।
कुलद्वयं हन्ति मदेन नारी
कूलद्वयं क्षुब्धजला नदीव ॥ ३ ॥

अये शब्द इव । बहुभिः कारणैर्भवितव्यम् । अयं हि,

बहुत्वाद् दूरसंस्थोऽपि समीप इव वर्तते ।
मत्सु हेतुसहस्रेषु दुरन्तयां शङ्कते मतिः ॥ ४ ॥

देवी–हं उप्पाणे गआ मे दुहिआ । [ हम् उत्थाने गता मे दुहिता । ]

राजा–कोऽत्र ।

( प्रविश्य )

भटः–जयतु महाराजः । एष आर्यकौञ्जायनो निवेदयितुमागतः ।

राजा–शीघ्रं प्रवेश्यताम् ।

भटः–यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

( ततः प्रविशति कौञ्जायनः । )

कौञ्जायनः–( सनिर्वेदम् ) भोः ! कष्टममात्यत्वं नाम । कुतः,

प्रसिद्धौ कार्याणां प्रवदति जनः पार्थिवबलं
विपत्तौ विस्पष्टं सचिवमतिदोषं जनयति ।
अमात्या इत्युक्ताः श्रुतिसुखमुदारं नृपतिभिः
सुसूक्ष्मं दण्डयन्ते मतिबलविदग्धाः सुगुरवः ॥ ५ ॥

जयसेन ! कस्मिन् प्रदेशे वर्तते स्वामी । किं ब्रवीषि—उपस्थानगृह इति । अतस्त्वदङ्कनीयेयं भूमिः । ( परिक्रम्य ससम्भ्रमम् ) प्रसीदतु प्रसीदतु स्वामी ।

राजा–अलमलं सम्भ्रमेण । स्वैरमुपविश्य कथ्यतां वृत्तान्तः ।

कौञ्जायनः—शृणोतु स्वामी । ननु स्वामिनाहमुक्तः—स्वामिदारिकया सह गच्छोद्यानम् इति ।

राजा—एवमुक्तम् । पुनः किम् ।

कौञ्जायनः—ततो गत्वोद्यानं यथासुखमाक्रीड्य निवर्तमानायां राजसुतायां दासीदासहसितकथितश्रवणबृंहितमदस्रवन्मदजलार्द्रदुर्दिनाननो निहतपतितसादिपुरुषः क्षितिरजोवगुण्ठिताव्यक्तभीममूर्तिर्मूर्तिमानिव पवनो दृप्तादृप्तलघुप्रचारः स्वामिसचिवानां वक्तव्यं जनयितुकाम इवैकपुरुषविशेषं प्रकाशयितुमिच्छन्निव मदान्धस्तं देशमभ्युपगतो हस्ती ।

राजा—तिष्ठतु विस्तरः । ननु कुशलिनी कुरङ्गी ।

कौञ्जायनः—कथमकुशलिनी भवति विद्यमानेषु स्वामिभागधेयेषु ।

राजा—दिष्ट्या । यथेष्टमिदानीं ब्रूहि ।

कौञ्जायनः—ततः प्रवृत्तेषु प्राकृतजनेषु हाहाकारमात्रप्रतीकारासु स्त्रीषु समाश्रितनिवृत्तेषु सपुरुषेषु उद्यानगतानां सर्वोपकरणानां परीक्षणाय मुहूर्तव्याक्षिप्ते मयि च नीतिगुप्ते सहसैव स्वामिदारिकाया यानमेव प्राप्तः स हस्ती ।

देवी—हं इदो वरं किण्णुखु भविस्सदि । [हम् इतः परं किन्नुखलु भविष्यति । ]

राजा—अथ केन सनाथीकृता कुरङ्गी ।

कौञ्जायनः—अथ कश्चिद् दर्शनी—( इत्यर्धोक्ते तिष्ठति )

राजा—यथेष्टमिदानीं ब्रूहि । निष्परिहारा व्यापदः ।

कौञ्जायनः—अथ कश्चिद् दर्शनीयोऽप्यविस्मितस्तरुणोऽप्यनहङ्कारः शूरोऽपि दाक्षिण्यवान् सुकुमारोऽपि बलवान् स्वामिदारिकायां हस्तिनाभिभूयमानायां तत्कालदुर्लभमभयं प्रदाय निर्विशङ्कः समासादितवांस्तं द्विपवरम् ।

राजा—अनृणः स कारुण्यस्य । ततस्ततः ।

कौञ्जायनः—ततस्तेन सललितसम्भ्रमकरतलताडनप्रभ्रष्टः सहसैव स्वामिदारिकां विहाय तमेव हन्तुकामः प्रतिनिवृत्तः स व्यालः ।

देवी—कुसलं होदु । [ कुशलं भवतु । ]

राजा—ततस्ततः ।

कौञ्जायनः—अथ तदनन्तरमभ्यागतेन भूतिकेन मया च पुनर्यानमारोप्य तूर्णमानीय कन्यान्तःपुरमेव प्रवेशिता स्वामिदारिका ।

राजा—अहो महानयं प्रमादः । अथ भूतिकः किमर्थं नाभ्यागतः ।

कौञ्जायनः—उक्तोऽहं भूतिकेन—गच्छेमं वृत्तान्तं स्वामिने कथय । अहं तस्य पुरुषस्य प्रवृत्तिमन्वयं च ज्ञात्वा शीघ्रमागमिष्यामीति ।

राजा—तेन हि सर्वं परीक्ष्यागमिष्यति भूतिकः । कौञ्जायन ! कतर कुलमुद्भूतः परव्यसनसहायः ।

कौञ्जायनः—स्वामिन् ! इद विमेधाद्यन्यात्मानमन्त्यजोऽहमिति ।

देवी—महाराअ ! अकुलीणो कहं एव्वं माणुसोत्तमो भवे । [ महाराज ! अकुलीनः कथमेवं मानुषोत्तमो भवेत् । ]

राजा—किन्नु खलु भवेदेतत् ।

( ततः प्रविशति भूतिकः । )

भूतिकः—( सविस्मयम् ) अहो प्रच्छन्नरत्नता पृथिव्याः । अस्य तावत् पुरुषस्य निर्व्याजेन विक्रमेण मन्दीभूता इव मनस्विनां विक्रमसमुदयः । एकस्तु मे संशयः, किमर्थमात्मानमन्वयं चाच्छादयति । अथवा कः शक्तः सूर्यं हस्तेनाच्छादयितुम् । इह हि,

एवं भवन्ति भुवि सत्पुरुषाः कथञ्चित्
स्वैः स्वाङ्गगुणजैश्च निगूह्यमानाः ।
भूयः परव्यसनमेत्य वियोगकामा
विस्मृत्य पूर्वनियमं विवृता भवन्ति ॥ ६ ॥

जयसेन ! कस्मिन् प्रदेशे वर्तते स्वामी । किं ब्रवीषि—उपस्थानगृह इति । अतस्त्वशङ्कनीयेयं भूमिः । यावत् प्रविशामि । ( प्रविश्य )
३ अये अयं महाराजो देव्या सहास्ते । ( उपगम्य ) जयतु महाराजः ।

राजा—देवि ! त्वमभ्यन्तरं प्रविश्याश्वासय कुरङ्गीम् । अहमप्यनुपदमागमिष्यामि ।

६ देवी—जं महाराओ आणवेदि । [ यन्महाराज आज्ञापयति । ] ( निष्क्रान्ता )

राजा—को वृत्तान्तस्तस्य परार्थमनवेक्षितशरीरस्य ।

९ भूतिकः—शृणोतु स्वामी । स मुहूर्तमनादरमत्वरितं सललितं प्रियवयस्येनेव तेन हस्तिना प्रक्रीडच निवर्तनानुवर्तनगतिविशेषैर्विमोह्य लज्जित इव तेन कर्मणा महाजनप्रशंसामसहमान. समवनत-
१२ शिरस्कः स्वैरं स्वमेवावासं गतः ।

राजा—भोः ! प्रीतोऽस्मि । अयं हि मे द्वितीयो लाभः ।

भूतिकः—अथ तदनन्तरमुपलभ्य हस्तिनीभिस्तं गजवरं सद्मा-
१५ हेमां गजशालां प्रवेश्याहं तस्य पुरुषस्य प्रवृत्तिमन्वयं च ज्ञातुमन्यापदेशेन गतवानस्मि ।

राजा—अथ किं कृतो निश्चयः । श्रुतमस्माभिरन्त्यज इति ।

१८ भूतिकः—शान्तं शान्तं पापम् । नायं तादृशः । केनापि कारणेनात्मानमन्वयं चाच्छादयति ।

राजा—अथ किं भवता परीक्षितम् ।

२१ भूतिकः—किमत्र परीक्षितव्यम् ।

दैवं रूपं ब्रह्मजं तस्य वाक्यं
क्षात्रं तेजः सौकुमार्यं बलं च ।
यद्येवं स्यात् सत्यमस्यान्त्यजत्वं
व्यर्थोऽस्माकं शास्त्रमार्गेषु खेदः ॥ ७ ॥

राजा–किमस्त्यस्य कलत्रम् ।

भूतिकः–सर्वमस्ति । कलत्रं स्वयमनिविष्टः ।

राजा–यद्यपि स्त्रीदर्शनं परिहृतं, किमर्थं तस्य पिता न परीक्षितः ।

भूतिकः–दृष्टस्तत्रभवान् सत्पुत्रसम्पन्नः । स हि,

> व्यायामस्थिरविपुलोच्छ्रितायतांसो
> ज्याघातप्रचितकिणोल्वणप्रकोष्ठः ।
> प्रच्छन्नोऽप्यनुकृतिलक्ष्यराजभावो
> मेघान्तर्गतरविवन् प्रमानुमेयः ॥ ८ ॥

राजा–अलमेतावता प्रसङ्गेन । पुनरप्येषा परीक्षा क्रियताम् ।

भूतिकः–यदाज्ञापयति स्वामी ।

राजा–अथेदानीं काशिराजदूतं प्रति किं कर्तव्यम् ।

भूतिकः–स्वामिन् ! दूतशतान्यागतान्यागमिष्यन्ति च ।

> न तत्र कर्तव्यमिहास्ति लोके
> कन्यापितृत्वं बहुवन्दनीयम् ।
> सर्वे नरेन्द्रा हि नरेन्द्रकन्यां
> महाः पताकामिव तर्कयन्ति ॥ ९ ॥

राजा–कोऽभिप्रायः ।

भूतिकः–सर्वत्र दाक्षिण्यं न कर्तव्यम् । गुणबाहुल्ये तदात्वमायतिं चावेक्ष्य त्वरतां दीर्घसूत्रतां च परित्यज्य देशकालाविरोधेन साधयितव्यं कार्यमित्यर्थः ।

राजा–युक्तमभिहितं भूतिकेन । कौञ्जायन ! किमर्थं तूष्णीं भूतः ।

कौञ्जायनः–स्वामिन् ! यद्यप्यपि क्षत्रियेषु पूर्वसम्बन्धविशेषौ सौवीरराजकाशिराजौ स्वामिनो भगिनीपतित्वे तुल्यौ अस्मत्सम्बन्धयोग्याविति स्वामिना चिन्तितौ । तत्र पूर्वमेव सौवीरराजेन पुत्रस्य

९ कारणाद् दूतः प्रेषितः। स चास्माभिरतिराजा कन्यैषयपदेशमुक्त्वा सुपूजितो विसर्जितः। इदानीं तु काशिराजेन पुत्रस्य कारणाद् दूतः प्रेषितः। तत्र बलाबलचिन्तायां स्वामी प्रमाणम्।

१२ राजा—सम्यगुक्तं कौञ्जायनेन। भूतिक! सर्वराजमण्डलमपोह्य द्वयोः स्थापितयोः कं प्रति विशेषः।

भूतिकः—न भृत्यदूषणीया राजानः, स्वामिनो हि स्वाम्यममात्यानाम्।

१५ राजा—अलमुपचारेण। ब्रूहि को निश्चयः।

भूतिकः—इदानीं तु न प्रत्याख्यातव्यम्। स्वामिन्! सौवीरराज-काशिराजौ स्वामिनो भगिनीपतित्वे तुल्यौ। अथ देव्या भ्रातेति

१८ सौवीरेन्द्रो गुणाधिकः।

राजा—न खलु भवानस्मत्सङ्कल्पानभिवादकः।

भूतिकः—उभयथानुगृहीतोऽस्मि।

२१ राजा—भोः! किन्नुखलु सौवीरेन्द्रेण पुनर्न दूतसम्पातः क्रियते।

भूतिकः—तत्रास्ति मे कश्चित् सन्देहः। सुष्ठु परीक्ष्य वक्ष्यामीति नोक्तवानस्मि।

२४ राजा—ननु कुशली तत्रभवान्।

भूतिकः—वदन्ति चारपुरुषाः—

> न दृश्यते तत्रभवान् सपुत्रः
> कार्याण्यमात्याः किल वर्तयन्ति।
> न विद्यते कारणमत्र किञ्चि-
> न्न लभ्यते राजकुलप्रवेशः॥ १०॥

राजा—भोः! किन्नुखलु भवेदेतत्।

> कामाहतः कुमतिभिः सचिवैर्गृहीतो
> रोगातुरः स्वजनरागमवेक्ष्यते वा।

शान्तो द्विजैर्व्रतमुपेत्य करोति शान्ति
को वा भवेन्नरपतेर्गृहदोषहेतुः ॥ ११ ॥

शीघ्रं परीक्ष्यतामेष वृत्तान्तः ।

भूतिकः—यदाज्ञापयति स्वामी ।

राजा—कौञ्जायन ! किमिदानीं काशिराजदूतं प्रति कर्तव्यम् ।

कौञ्जायनः—एवं गते काशिराजदूतः पूजयितव्यः । बहुमुखा विवाहा यथेष्टं साध्यन्ते ।

राजा—अहो कार्यमेवापेक्षते बुद्धिरमात्यानां, न स्नेहम् ।

( नेपथ्ये )

जयतु स्वामी, जयतु महाराजः । दश नालिकाः पूर्णाः ।

भूतिकः—स्वामिन् ! शेषमभ्यन्तरे चिन्तयिष्यामः । अतिक्रामति स्नानवेला । स्वामिदारिका चाश्वासयितव्या । महादेवी च चिरं प्रतीक्षते । महाजनोऽप्यस्मिन्नुत्सवे स्वामिनं द्रष्टुमिच्छति ।

राजा—अहो महद्भारो राज्यं नाम । कुतः,

धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुद्ध्या
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्यौ ।
ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः ॥१२॥

( निष्क्रान्ताः सर्वे । )

प्रथमोऽङ्कः ।

प्रतिच्छन्दं धात्रा युवतिवपुषां किंनु रचितं
गता वा स्त्रीरूपं कथमपि च ताराधिपरुचिः ।
विहाय श्रीः कृष्णं जलशयनमुग्रं कृतभया
धृतान्यस्त्रीरूपं क्षितिपतिगृहे वा निवसति ॥ ३ ॥

कथमहं पुनरारब्धश्चिन्तयितुम् । किमिदानीं करिष्ये । मनश्च तावदस्मदिच्छया न प्रवर्तते । इह हि,

प्रतिषिद्धं प्रयत्नेन क्षणमात्रं न धीयते ।
चिराभ्यस्तपथं याति शार्ङ्गं दुर्गुणितं यथा ॥ ४ ॥

अथवा न शक्यं मनो जेतुम् । चिन्तयिष्याम्येनाम् । अहो सर्वेषां स्त्रीगुणानामेकत्र समवायः । ( चिन्ताभिभूत उपविशति )

( ततः प्रविशति धात्री नलिनिका च । )

धात्री–( सवितर्कम् ) अहो सङ्कटदा कय्यस्स । जइ एवं करीअदि, राअउलं दूसिअं होइ । जदि ण करीअदि, अवस्सं सा विपज्जइ । मए अणेगेहिं उवाएहिं विआरिदं च । ममं वि सा अज्ज वि पच्छादेदि । अहव किं ताए पच्छादिदं । सा तदप्पहुदि सुमणावण्णअं णेच्छदि, आहारं णाभिलसदि, ण रमदि गोट्ठीजणेण, दिग्घं णिस्ससदि, असम्बद्धं कहेदि, कहिदं ण जाणादि, मुद्धं हसदि, विविचे रोदिदि, रोअं अवदिसदि, तणुआ होदि, पण्डुभावं गच्छदि । एक्कं पि तहिं अच्छरिअं । एवंविधेहिं अवत्थाविसेसेहिं अत्तणो लज्जाए भएण कुलमाणेण बालभावेण अ एक्कस्सा वि किञ्चि ण मन्तेदि । [ अहो सङ्कटता कार्यस्य । यद्येवं क्रियते, राजकुलं दूषितं भवति । यदि न क्रियतेऽवश्यं सा विपद्यते । मयानेकैरुपायैर्विचारितं च । ममापि साद्यापि प्रच्छादयति । अथवा किं तया प्रच्छादितम् । सा तदाप्रभृति सुमनोवर्णकं नेच्छति

१ 'अउआरणं णि'.

धात्री–हला ! केण खु भणिदं । [ हला ! केन खलु भणितम् । ]

नलिनिका–एत्थ को वि ण दिस्सदि । [ अत्र कोऽपि न दृश्यते । ]

३ धात्री–पहिट्ठरोमकूवं मे सरीरं । असंसअं दव्वेण भणिदं । अहं पुण जाणामि ण एसो केवलो माणुसत्ति । [ प्रहृष्टरोमकूपं मे शरीरम् । असंशयं दैवेन भणितम् । अहं पुनर्जानामि नैष केवलो मानुष इति । ]

६ नलिनिका–गदो तस्स कुलसन्देहो । अम्हाणं वअणं करेदि ण करेदि त्ति चिन्तेमि । ( विचिन्त्य ) धण्णो खु सो जणो इमं एवं उम्मादेदि । किं बहुणा, सअं कामदेवो वि भट्टिदारिआए रूवं

९ पेक्खिअ किलिस्सिदि । तेण सो वि किलिस्सिदि त्ति तक्केमि । [ गतस्तस्य कुलसन्देहः । अस्माकं वचनं करोति न करोतीति चिन्तयामि । धन्यः खलु स जन इमामेवमुन्मादयति । किं बहुना, स्वयं काम-

१२ देवोऽपि भर्तृदारिकाया रूपं प्रेक्ष्य क्लिश्यते । तेन सोऽपि क्लिश्यत इति तर्कयामि । ]

धात्री–हला ! एसो तस्स आवासो, जं तदा हरिदसम्भमदिअसे

१५ कोदूहलेण आअदम्ह । [ हला ! एष तस्यावासः, यं तदा हरितसम्भ्रमदिवसे कौतूहलेनागते स्वः । ]

नलिनिका–हला ! अहो दस्सणीअं किदोवहारं च दुवारमुहं ।

१८ हला ! एहि पविसामो । [ हला ! अहो दर्शनीयं कृतोपहारं च द्वारमुखम् । हला ! एहि प्रविशावः । ]

धात्री–हला ! कहिं भट्टिदारओ । किं भणासि–चउस्साले वत्तदि

२१ त्ति । ( परिक्रम्यावलोक्य ) अअं अम्हाणं भट्टिदारओ एक्को एव वि चिन्तअन्तो चिट्ठइ । [ हला ! कुत्र भर्तृदारकः । किं भणसि–चतुःशाले वर्तत इति । अयमस्माकं भर्तृदारक एक एव किमपि

२४ चिन्तयंस्तिष्ठति । ]

१ 'कोवि ण'.

नलिनिका—हला ! णं पविसामो । [ हला ! ननु प्रविशावः । ]
धात्री—एवं करेह । ( प्रविश्य ) सुहं अय्यस्स । [ एवं कुर्वः ।
२७ सुखमार्यस्य । ]
अविमारकः—अहो सम्या रूपसम्पत् ।
धात्री—( सानुस्म् ) किण्णुहु भवे । सुहं अय्यस्स । [ किन्नुखलु
३० भवेत् । सुखमार्यस्य । ]
अविमारकः—
उरः स्तनतटालसं जघनभारखिन्ना तनुः
धात्री—अम्मो विप्पलवदि । [ अम्मो विप्रलपति । ]
अविमारकः—
मुखं नयनवल्गमं प्रकुलिताम्रबिम्बाधरम् ।
धात्री—धण्णो खु सो जणो इमं एवं उम्मादेदि । [ धन्यः खलु स
जन इममेवमुन्मादयति । ]
अविमारकः—
भवेऽपि यदि तादृशं नयनपात्रपेयं वपुः
धात्री—सुट्ठिदं कय्यं । [ सुस्थितं कार्यम् । ]
अविमारकः—
कथन्नु सुरतान्तरप्रचुरविभ्रमं तद् भवेत् ॥ ६ ॥
धात्री—सा एव इमं उम्मादेदि । [ सैवेममुन्मादयति । ]
नलिनिका—सुट्ठु भणिदं—एसो वि किलिस्सिदि त्ति । [ सुष्ठु भणितम्-
३ एषोऽपि क्लिश्यत इति । ]
धात्री—सुट्ठु विञ्जादं तुए । सुहं अय्यस्स । [ सुष्ठु विज्ञातं त्वया ।
सुखमार्यस्य । ]
६ अविमारकः—( विलोक्य सत्रीडम् ) स्वागतं भवतीभ्याम् ।
उभे—अवि सुहं । [ अपि सुखम् । ]

अविमारकः—भविष्यति वां दर्शनेन ।

९ धात्री—अय्य ! किं चिन्तीअदि । [ आर्य ! किं चिन्त्यते । ]

अविमारकः—भवति ! शास्त्रं चिन्त्यते ।

धात्री—किं णाम एदं रमणीअं सत्थं विवित्थे चिन्तीअदि¹ । [ किं

१२ नामैतद् रमणीयं शास्त्रं विविक्ते चिन्त्यते । ]

अविमारकः—भवति ! योगशास्त्रं चिन्त्यते ।

धात्री—( सस्मितम् ) पडिग्गहिदं मङ्गलवअणं जोअसत्थं एव्व

१५ होदु । [ प्रतिगृहीतं मङ्गलवचनम् । योगशास्त्रमेव भवतु । ]

अविमारकः—( आत्मगतम् ) कोऽनु खल्वु वाक्यार्थः । अन्यदप्यभि-

लापवशादन्यथा सङ्कल्पयामि । ( प्रकाशम् ) किमभिप्रेतं भवत्याः ।

१८ धात्री—जोअं इच्छन्तीओ आअदम्ह । अणुमदो अय्येण जोओ त्ति

णं णिद्दिट्ठं कय्यं अम्हाअं राअउले विवित्ते अवआसे । तहिं पि

को वि जणो अहिअदरं जोअं चिन्तअन्तो अच्छदि । तेण मए

२१ तहिं एव्व अय्येण सुट्ठु जोअविहाणं चिन्तीअदु त्ति । [ योगमि-

च्छन्त्यावागते स्वः । अनुमत आर्येण योग इति ननु निर्दिष्टं कार्य-

मस्माकं राजकुले विविक्तेऽवकाशे । तत्रापि कोऽपि जनोऽधिकतरं योगं

२४ चिन्तयन्नास्ते । तेन मया तत्रैवार्येण सुष्ठु योगविधानं चिन्त्यतामिति ।]

अविमारकः—कथमद्यापि मायदोषाणि मे भाग्यानि । ( आसनादुत्थाय )

भवति ! पुनर्दत्ता इव मे प्राणाः । कुतः,

तस्या मयाकुलितदृष्टिरियं मनोज्ञा

सौम्यप्रकारमतितीक्ष्णमवेक्ष्य वक्त्रम् ।

उन्मादमभ्युपगतोऽस्मि चिरं भवत्या-

र्वाक्यामृतेन पुनरद्य कृतः ससंज्ञः ॥ ७ ॥

---

१ आवासे. २ पुनर्भवत्या.

धात्री—दिट्ठिआ अय्येण परिपालिदो अअं जणो । अलमदिप्प-सङ्गेण । अज्ज एव पविसिदव्वं कण्णाउरं । अमच्चो अय्यभूदिओ
३ कण्णाउररक्खओ कासिराअदूदेण सह अम्हाअं महाराएण पूइदो पत्थिदो अ । [ दिष्ट्यार्येण परिपालितोऽयं जनः । अलमतिप्रसङ्गेन । अद्यैव प्रवेष्टव्यं कन्यापुरम् । अमात्य आर्यभूतिकः कन्यापुररक्षकः
६ काशिराजदूतेन सहास्माकं महाराजेन पूजितः प्रस्थितश्च । ]

अविमारकः—बाढम् । प्रथमः कल्पः । भवति ! कन्तावदीपथमुप-लभ्य मन्दीभवत्यातुरः ।

९ धात्री—पवेसमत्तं एव्व दुल्लहं । सक्कं अब्भन्तरे चिरं वसिदुं । [ प्रवेशमात्रमेव दुर्लभम् । शक्यमभ्यन्तरे चिरं वस्तुम् । ]

अविमारकः—प्रविष्ट एवाहं चिन्तयितव्यः । क्रियतामनर्गलविशाला
१२ प्रासादमाला ।

धात्री—एवं करेम्ह । सव्वं अब्भन्तरकरणीअं संपादेम्ह । अप्प-मत्तो एव पविसदु अय्यो । [ एवं कुर्वः । सर्वमभ्यन्तरकरणीयं
१५ संपादयावः । अप्रमत्त एव प्रविशत्वार्यः । ]

अविमारकः—भवति ! सकृदभिधीयतां राजकुलस्य विधानम् ।

धात्री—एवं विअ । [ एवमिव । ]

१८ अविमारकः—हन्त भोः !

श्रुत्वा तु राज्ञो गृहसंविधानं
　　प्रविष्टमात्मानमवैति बुद्धिः ।
न पौरुषं वै परदूषणीयं
　　न चेद् विसंवादमुपैति दैवम् ॥ ८ ॥

( विचिन्त्य ) भवति ! कोऽस्माकमस्मिन् कार्ये प्रत्ययः ।

२१ उभे—अअं पच्चओ । जेदु भट्टिदारओ । [ अयं प्रत्ययः । जयतु
२४ भर्तृदारकः । ]

अविमारकः–हन्त गम्यतां सम्प्रति । प्रतीक्ष्यतामर्धरात्रम् ।

उभे–जं भट्टिदारओ आणवेदि ( निष्क्रान्ते ) [ यद् भर्तृदारक
६ आज्ञापयति । ]

( ततः प्रविशति विदूषकः । )

विदूषकः–अहो णअरस्स सोहा संपदि । अत्थं आसादिदो
९ भअवं सुय्यो दीसइ दहिपिण्डपण्डरेसु पासादेसु अग्गापणा-
लिन्देसु पसारिअगुळमहुरसङ्गदो विअ । गणिआजणो
णाअरिअजणो अ अण्णोण्णविसेसमण्डिदा अत्ताणं दंसइदु-
१२ कामा तेसु तेसु पासादेसु सविब्भमं सञ्चरन्ति । अहं तु तादि-
साणि पेक्खिअ उम्मादिअमाणस्स तत्तहोदो रत्तिमहाओ होमि त्ति
णअराओ णिग्गदो म्हि । सो वि दाव अम्हाणं अधण्णदाए केण वि
१५ अणत्थसञ्चिन्तणेण अण्णादिसो विअ संवुत्तो । एदं तत्तहोदो
आवासगिहं । अज्ज णअरापणाळिन्दे सुणामि तत्तहोदो गिहादो
णिग्गदा राअदारिआए धत्ती संही आत्ति । किंणुखु एत्थ कय्यं ।
१८ अहव हत्थिरथपञ्चाणि पुरुसभग्गाणि होन्ति । अहव गच्छदु
अणत्थो अम्हाणं । अवत्थासदिसं राअउले पविसामि । (प्रविश्य)
ही ही एसो अत्तभवं कामुअजणवण्णणाए अणुळित्तो विअ पण्डु-
२१ भावेण इदो एव आअच्छदि । अहव सव्वो अळङ्कारो होदि
सुरूवाणं । ( उपेत्य ) जेदु भवं । [ अहो नगरस्य शोभा सम्प्रति ।
अस्तमासादितो भगवान् सूर्यो दृश्यते दधिपिण्डपाण्डरेषु प्रासादेष्व-
२४ ग्रापणालिन्देषु प्रसारितगुल्ममधुरसाक्त इव । गणिकाजनो नागरिकजन-
श्चान्योन्यविशेषमण्डितावात्मानं दर्शयितुकामौ तेषु तेषु प्रासादेषु सविभ्रमं
संचरतः । अहं तु तादृशानि प्रेक्ष्योन्माद्यतस्तत्रभवतो रात्रिसहायो
२७ भवामीति नगराद्विनिर्गतोऽस्मि । सोऽपि तावदस्माकमधन्यतया केनाप्य-
नर्थसंचिन्तनेनान्यादृश इव संवृत्तः । एतत् तत्रभवत आवासगृहम् ।

अद्य नगरापणालिन्दे शृणोमि भवभवनो गृहान्निर्गता राजदारिकाया
३० धात्री सखी चेति । किंनु खल्वत्र कार्यम् । अथवा हस्तिहस्तचञ्चलानि
पुरुषभाग्यानि भवन्ति । अथवा गच्छत्वनर्थोऽस्माकम् । अवस्थासदृशं
राजकुलं प्रविशामि । ही ही एषोऽत्रभवान् कामुकजनवर्णकानुलिप्त इव
३३ पाण्डुभावेनेत एवागच्छति । अथवा सर्वमलङ्कारो भवति सुरूपाणाम् ।
जयतु भवान् । ]

अविमारकः–वयस्य ! अतिचिरलम्बितमिव भवता नगरे ।

३६ विदूषकः–तुमं दाव आमन्तणविप्पलद्धो विअ बम्हणो अहोरत्तं
चिन्तेसि । अहं पि दाव दिअसे णअरं परिब्भमिअ अलद्धभोआ
पाअड्डणिआ विअ रत्तिं पस्सदो सइदुं आअच्छामि । [ त्वं
३९ तावदामन्त्रणविप्रलब्ध इव ब्राह्मणोऽहोरात्रं चिन्तयसि । अहमपि
तावद् दिवसे नगरं परिभ्रम्यालब्धभोगा प्राकृतणिकेव रात्रौ पार्श्वतः
शयितुमागच्छामि । ]

४२ अविमारकः–सखे ! प्रियं ते कथयिष्यामि ।

विदूषकः–किं समत्तो अम्हाअं इसिभावो । [ किं समाप्तोऽस्माकमृषिभावः । ]

४५ अविमारकः–मूर्ख ! अवश्यं भवितव्येऽर्थे कः प्रहर्षः ।

विदूषकः–किं पुण अण्णं । [ किं पुनरन्यत् । ]

अविमारकः–किं न दृष्टा कुरङ्गया धात्री नलिनिका च ।

४८ विदूषकः–आमं भो ! दिट्ठाओ तत्तहोदीओ । किं आणीदं । [ आम भोः ! दृष्टे तत्रभवत्यौ । किमानीतम् । ]

अविमारकः–अस्मच्छोकापघमानीतम् ।

५१ विदूषकः–पेक्खामि दाव । [ पश्यामि तावत् । ]

अविमारकः–काले द्रक्ष्यसि । अद्य तावच्छ्रूयताम् ।

विदूषकः–भणादु भणादु भवं । [ भणतु भणतु भवान् । ]

५४ अविमारकः–किं बहुना । तत्रभवती ब्रवीति अद्यैव प्रवेष्टव्यं कन्यापुरमिति ।

विदूषकः–( विहस्य ) केण खु उवाएण अब्भन्तरं पविसिअ जीव
५७ ग्गहणं पत्तुकामोऽसि । अमच्चा णाम विसमसीला कुन्तिभोअस्स । [ केन खलूपायेनाभ्यन्तरं प्रविश्य जीवग्रहणं प्राप्तुकामोऽसि । अमात्या नाम विषमशीलाः कुंतिभोजस्य । ]

६० अविमारकः–कथं भवतापि शङ्कनीयम् । पश्य,

> भग्ना मयैकेन पराः ससैन्या
> अद्यापि गन्धेन न संश्रयन्ते ।
> किं मानुषैः सोऽप्यसुरेश्वरो मे
> हतो भुजाभ्यामविरूपधारी ॥ ९ ॥

विदूषकः–जाणामि जाणामि भवदो अमाणुसाणि कम्माणि । सव्वहा सङ्कणीओ रत्तिच्छण्णो परगिहप्पवेसो । [ जानामि
३ जानामि भवतोऽमानुषाणि कर्माणि । सर्वथा शङ्कनीयो रात्रिच्छन्नः परगृहप्रवेशः । ]

अविमारकः–एष समासः । सर्वथा प्रवेष्टव्यं कुन्तिभोजस्य कन्या-
६ पुरम् । तदनुमन्तुमर्हति महाब्राह्मणः ।

विदूषकः–कहं मं उज्झिअ गच्छसि । अहं भवन्तं सव्वकालं ण मुञ्चामि । अक्कोसन्तो वि एक्को इच्छिदव्वो । [ कथं मामुज्झित्वा
९ गच्छसि । अहं भवन्तं सर्वकालं न मुञ्चामि । आक्रोशन्नप्येक एष्टव्यः । ]

अविमारकः–न जानाति भवान् शास्त्रमार्गम् ।

> एकः परगृहं गच्छेद् द्वितीयेन तु मन्त्रयेत् ।
> बहुभिः समरं कुर्यादित्ययं शास्त्रनिर्णयः ॥ १० ॥

तस्मादेकेनैव मया प्रवेष्टव्यं कुन्तिभोजस्य कन्यापुरम्। न ते वयं शङ्कनीयाः । पश्यतु भवान्,

मितगुणमिह कुन्तिभोजसैन्यं
नृपभवनं विभवैः सुखं प्रवेष्टुम् ।
वयमपि च भुजायुधप्रधानाः
किमिह सखे ! भवतापि शङ्कनीयाः ॥ ११ ॥

विदूषकः–जइ एवं किदो णिच्चओ, संपदि णअरं पविसामो । तहिं मम अत्थि मित्तो । तस्स आवासे कालं पडिवालम्ह । [ यद्येवं कृतो निश्चयः, संप्रति नगरं प्रविशावः । तत्र ममास्ति मित्रम् । तस्यावासे कालं प्रतिपालयावः । ]

अविमारकः–सम्यग् भवानाह । साम्प्रतमभ्यन्तरं प्रविश्य कृताह्निको महाराजेनाभ्यनुज्ञातो वासगृहे शयनसंविधानं प्रविश्याज्ञातो नगरं प्रविश्य भवतो मित्रगृहे कालं प्रतिपालयामि ।

( प्रविश्य )

चेटी–जेदु भट्टिदारओ । आवुत्तं ह्णाणोदअं । [ जयतु भर्तृदारकः । आवृत्तं स्नानोदकम् । ]

अविमारकः–अयमयमागच्छामि । गच्छाग्रतः ।

चेटी–जं भट्टिदारओ आणवेदि । ( निष्क्रान्ता ) [ यद् भर्तृदारक आज्ञापयति । ]

अविमारकः–वयस्य ! अस्तमितो भगवान् दिवाकरः । सम्प्रति हि–

पूर्वा तु काष्ठा तिमिरानुलिप्ता
सन्ध्यारुणा भाति च पश्चिमाशा ।
द्विधा विभक्तान्तरमन्तरिक्षं
यात्यर्धनारीश्वररूपशोभाम् ॥ १२ ॥

विदूषकः—सुट्ठु भवं भणादि । अदिक्कन्दो दिअसो । आरूढो पओसो । [ सुष्ठु भवान् भणति । अतिक्रान्तो दिवसः । आरूढः
३ प्रदोषः । ]

अविमारकः—अहो विचित्रस्वभावता जगतः । कुतः ।

श्यामप्रसूर्यतिलको विततांशुमालो
नष्टातपो मृदुमनोहरशीतवातः ।
संलीनकामुकजनः प्रविकीर्णशूरो
वेशान्तरं रचयतीव मनुष्यलोकः ॥ १३ ॥

( निष्क्रान्तौ )

द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशति कुरङ्गी चेट्यौ च )

३ कुरङ्गी—हळा ! किं तेण भणिअं । [ हला ! किं तेन भणितम् । ]
चेटी—भट्टिदारिए ! केण । [ भर्तृदारिके ! केन । ]
कुरङ्गी—( स्वगतम् ) हं भिन्दामि खु मन्दभाआ । ( प्रकाशम् )
६ कण्णेउरचेडेण । [ हं भिनद्मि खलु मन्दभागा । कन्यापुरचेटेन । ]
मागधिका—दिट्ठो मए कण्णेउरचेडो । भणिदं च । ण किंचि आह ।
[ दृष्टो मया कन्यापुरचेटः । भणितं च । न किञ्चिदाह । ]
९ कुरङ्गी—हन्त भट्टिणीए णिवेदेमि—कण्णेउरचेडो मम सुअपञ्जरं ण करेदि त्ति [ हन्त भट्टिन्यै निवेदयामि—कन्यापुरचेटो मम शुकपञ्जरं न करोतीति । ]
१२ मागधिका—णं णिट्ठिदो सुअपञ्जरो भट्टिदारिए । [ ननु निष्ठितः शुकपञ्जरो भर्तृदारिकायाः । ]

कुरङ्गी–याचादे ! किं अण्णो वि अत्थि । [ याचाटे ! किमन्योऽप्यस्ति । ]

मागधिका–भोदव्वं । [ भवितव्यम् । ]

कुरङ्गी–हळा ! का वेळा । [ हला ! का वेला । ]

मागधिका–ओगाहो पओसो । [ अवगाढः प्रदोषः । ]

कुरङ्गी–तेण हि पासादं आलुहामो। [ तेन हि प्रासादमारोहामः । ]

मागधिका–विळासिणि ! अग्गदो जाहि । विरएहि सअणासणाणि।
[ विलासिनि ! अग्रतो याहि । विरचय शयनासनानि । ]

विलासिनी–मुसा क्खु तुवं । को काळो विरइदाणि सअणासणाणि ।
[ मुसा खलु त्वम् । कः कालो विरचितानि शयनासनानि । ]

मागधिका–हळा ! जाणामि दे अळसत्तणं । दियसरइदाणि भणामि रइदाणि त्ति । [ हला ! जानामि तेऽलसत्वम् । दिवसरचितानि भणामि रचितानीति । ]

विलासिनी–हळा ! मा गव्वं भणाहि । भट्टिदारिअं अन्तरेण अण्णादिसाणि होन्ति । [ हला ! मैवं भण । भर्तृदारिकामन्तरेणान्यादृशानि भवन्ति । ]

मागधिका–हळा ! गदुअ जाणामि । [ हला ! गत्वा जानामि । ]

( सर्वाः परिक्रामन्ति । )

मागधिका–एसो पासादो । [ एष प्रासादः । ]

कुरङ्गी–अग्गदो जाहि । (आरोहणं नाटयति । ) [ अग्रतो याहि । ]

मागधिका–साहु विळासिणि ! साहु । असण्णो णाममदिंमं किदं । एदस्सिं सिळादळे रइदं सअणं । [ साधु विलासिनि ! साधु । आसन्नो नामसन्दो कृतम् । एतस्मिन् शिलातले रचितं शयनम् । ]

विलासिनी–अब्भन्तरमण्डवे क्खु रइदं सअणं । मागधिए ! पेक्ख पेक्ख मे अळसत्तणं । [अभ्यन्तरमण्डपे खलु रचितं शयनम् । मागधिके ! पश्य पश्य मेऽलसत्वम् । ]

विदूषकः–सुट्ठु भवं भणादि । अदिक्कन्दो दिअसो । आरूढो पदोसो । [ सुष्ठु भवान् भणति । अतिक्रान्तो दिवसः । आरूढः
३ प्रदोषः । ]

अविमारकः–अहो विचित्रस्वभावता जगतः । कुतः ।

> श्यामभूतसूर्यतिलको विततोडुमालो
> नष्टातपो मृदुमनोहरशीतवातः ।
> संलीनकामुकजनः प्रविकीर्णशूरो
> वेषान्तरं रचयतीव मनुष्यलोकः ॥ १३ ॥

( निष्क्रान्तौ )

## द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशति कुरङ्गी चेट्यौ च )

३ कुरङ्गी–हला ! किं तेण भणिअं । [ हला ! किं तेन भणितम् । ]
चेटी–भट्टिदारिए ! केण । [ भर्तृदारिके ! केन । ]
कुरङ्गी–( स्वगतम् ) हं भिन्दामि क्खु मन्दभाआ । ( प्रकाशम् )
६ कण्णेउरचेडेण । [ हं भिनद्मि खलु मन्दभागा । कन्यापुरचेटेन । ]
मागधिका–दिट्ठो मए कण्णेउरचेडो । भणिदं च । ण किंचि आह ।
[ दृष्टो मया कन्यापुरचेटः । भणितं च । न किंचिदाह । ]
९ कुरङ्गी–हन्त भट्टिणीए णिवेदेमि—कण्णेउरचेडो मम सुअपञ्जरं ण करेदि त्ति [ हन्त भट्टिन्यै निवेदयामि –कन्यापुरचेटो मम शुकपञ्जरं न करोतीति । ]
२ मागधिका–णं णिद्दिट्ठो सुअपञ्जरो भट्टिदारिए । [ ननु निर्दिष्टः शुकपञ्जरो भर्तृदारिकायाः । ]

कुरङ्गी—वाचाटे ! किं अण्णो वि अत्थि । [ वाचाटे ! किमन्योऽप्यस्ति । ]

मागधिका—भोदव्वं । [ भवितव्यम् । ]

कुरङ्गी—हला ! का वेला । [ हला ! का वेला । ]

मागधिका—ओगाहो पओसो । [ अवगाढः प्रदोषः । ]

कुरङ्गी—तेण हि पासादं आलुहामो । [ तेन हि प्रासादमारोहामः । ]

मागधिका—विलासिणि ! अग्गदो जाहि । विरएहि सअणासणाणि ।
१ [ विलासिनि ! अग्रतो याहि । विरचय शयनासनानि । ]

विलासिनी—सुत्ता खु तुयं । को कालो विरइदाणि सअणासणाणि ।
[ सुप्ता खलु त्वम् । कः कालो विरचितानि शयनासनानि । ]

मागधिका—हला ! जाणामि दे अलसत्तणं । दिवसरइदाणि भणासि रइदाणि त्ति । [ हला ! जानामि तेऽलसत्वम् । दिवसरचितानि भणसि रचितानीति । ]

विलासिनी—हला ! मा एव्वं भणाहि । भट्टिदारिअं अन्तरेण अण्णादिसाणि होन्ति । [ हला ! मैवं भण । भर्तृदारिकामन्तरेणान्यादृशानि भवन्ति । ]

मागधिका—हला ! गदुअ जाणामि । [ हला ! गत्वा जानामि । ]

( सर्वाः परिक्रामन्ति । )

मागधिका—एसो पासादो । [ एष प्रासादः । ]

२ कुरङ्गी—अग्गदो जाहि । (आरोहणं नाटयति । ) [ अग्रतो याहि । ]

मागधिका—साहु विलासिणि ! साहु । अत्तणो णामसरिसं किदं । एदस्सिं सिलादले रइदं सअणं । [ साधु विलासिनि ! साधु । आत्मनो नामसदृशं कृतम् । एतस्मिन् शिलातले रचितं शयनम् । ]

विलासिनी—अब्भन्तरमण्डवे खु रइदं सअणं । मागधिए ! पेक्ख पेक्ख मे अलसत्तणं । [ अभ्यन्तरमण्डपे खलु रचितं शयनम् । मागधिके ! पश्य पश्य मेऽलसत्वम् । ]

मागधिका–अदिपण्डिदा क्खु मंवुत्ता । एवं पण्डिदचेडवुत्तं भत्तारं लभेहि । [ अतिपण्डिता खलु संवृत्ता । एवं पण्डितचेटवृत्तं भर्तारं
४५ लभस्व । ]

कुरङ्गी–हला ! इमस्सिं सिळावट्टके मुहुत्तअं उवविसामि । [ हला ! अस्मिन् शिलापट्टके मुहूर्तकमुपविशामि । ]

४८ मागधिका–जं भट्टिदारिआए रुइदं । होदु । [ यद् भर्तृदारिकायै रुचितम् । भवतु । ]

( सर्वा उपविशन्ति )

५१ मागधिका–भट्टिदारिए ! कहेमि वक्खाणं । [ भर्तृदारिके ! कथयामि व्याख्यानम् । ]

कुरङ्गी–हला ! जाणामि दे असम्बद्धप्पलावं । [ हला ! जाना
५४ मि तेऽसम्बद्धप्रलापम् । ]

मागधिका–भट्टिदारिए ! अभिणवा क्खु कहा । [ भर्तृदारिके अभिनवा खलु कथा । ]

५७ कुरङ्गी–याचेमि, मा णिब्बन्धिअ, मुहुत्तअं सआमि । [ याचे, निर्बध्य, मुहूर्तकं शये । ]

विलासिनी–सुदं सहदु भट्टिदारिआ । मे कहेहि । [ सुतं
६० भर्तृदारिका । मम कथय । ]

कुरङ्गी–( आत्मगतम् ) किंणुक्खु भवे । [ किंनुखलु भवेत् । ]

मागधिका–हला ! सुणाहि भट्टिदारिअं अन्तरेण । [ हला ! शृणु
६३ भर्तृदारिकामन्तरेण । ]

कुरङ्गी–हं विदिदं रहस्सं । परिब्भट्टम्हि । [ हं विदितं रहस्यम् परिभ्रष्टास्मि । ]

६६ विलासिनी–हला ! कहिं तुए सुदं । [ हला ! कुत्र त्वया श्रुतम् । ]

मागधिका–भट्टिणीपरिचारिआए वसुमित्ताए कहिदं । [ भट्टिनीपरिचारिकया वसुमित्रया कथितम् । ]

६९ विलासिनी–सअं णाम भट्टिणीए कहिदं होदि । [ स्वयं नाम भट्टिन्या कथितं भवति । ]

मागधिका–अत्थि कासिराअपुत्तो जअवम्मा णाम । तस्स दिण्णा
७२ भट्टिदारिआ । तस्स अ दूदो आअदो महाराएण पूइदो । पडिग्गाहिदं च वण्णिआरं । [ अस्ति काशिराजपुत्रो जयवर्मा नाम । तस्मै दत्ता भर्तृदारिका । तस्य च दूत आगतो महाराजेन पूजितः । प्रति-
७५ गृहीतं च वर्णिकारम् । ]

कुरङ्गी–( आत्मगतम् ) एदं अलिअं । अहं अत्तणो पभवामि । [ एतदलीकम् । अहमात्मनः प्रभवामि । ]

७८ मागधिका–तहिं किल भट्टिणीए भणिदं—वाला खु मे दुहिआ, ण सक्कुणोमि एक्कं पि दिअसं अपेक्खन्ती जीविदुं । जदि मे महाराओ पसण्णो, एत्थ एव्व जामादुओ आणीदव्वो त्ति ।
८१ [ तत्र किल भट्टिन्या भणितं—वाला खलु मे दुहिता, न शक्नोम्येकमपि दिवसमपश्यन्ती जीवितुम् । यदि मे महाराजः प्रसन्नः, अत्रैव जामाता-नेतव्य इति । ]

८४ विलासिनी–तदो तदो । [ ततस्ततः । ]

मागधिका–तदो तं पि किल अणुमदं महाराएण । अज्ज णक्खत्तं सोभणं त्ति तेण अ दूदेण अमच्चो अय्यभूदिओ पत्थिदो । [ तत-
८७ स्तदपि किलानुमतं महाराजेन । अद्य नक्षत्रं शोभनमिति तेन च दूतेनामात्य आर्यभूतिकः प्रस्थितः । ]

कुरङ्गी–( स्वगतम् ) हन्त कालन्तरिदं कय्यं । [ हन्त कालान्तरितं
९० कार्यम् । ]

विलासिनी–पिअं भट्टिदारिआए रूवजोव्वणं सफलं संवुत्तं त्ति । [ प्रियं भर्तृदारिकाया रूपयौवनं सफलं संवृत्तमिति । ]

मागधिका—अदिपण्डिदा क्खु संवुत्ता । एवं पण्डितचेडवुत्तं भत्तारं
लभेहि । [ अतिपण्डिता खलु संवृत्ता । एवं पण्डितचेटवृत्तं भर्तारं
४५ लभस्व । ]

कुरङ्गी—हळा ! इमस्सिं सिळादळे मुहुत्तअं उवविसामि । [ हला !
अस्मिन् शिलातले मुहूर्तकमुपविशामि । ]

४८ मागधिका—जं भट्टिदारिआए रुइदं । होदु । [ यद् भर्तृदारिकायै
रुचितम् । भवतु । ]

( सर्वा उपविशन्ति )

५१ मागधिका—भट्टिदारिए ! कहेमि वक्खाणं । [ भर्तृदारिके ! कथ-
यामि व्याख्यानम् । ]

कुरङ्गी—हळा ! जाणामि दे असम्बद्धप्पळावं । [ हला ! जानामि
तेऽसंबद्धप्रलापम् । ]

मागधिका—भट्टिदारिए ! अभिणवा क्खु कहा । [ भर्तृदारिके !
अभिनवा खलु कथा । ]

५७ कुरङ्गी—याचेमि, मा णिब्बन्धिअ, मुहुत्तअं सआमि । [ याचे, मा
निर्बध्य, मुहूर्तकं शये । ]

विलासिनी—सुदं सहदु भट्टिदारिआ । मे कहेहि । [ सुखं शेतां
६० भर्तृदारिका । मम कथय । ]

कुरङ्गी—( आत्मगतम् ) किंणुक्खु भवे । [ किंनुखलु भवेत् । ]

मागधिका—हळा ! सुणाहि भट्टिदारिअं अन्तरेण । [ हला ! शृणु
६३ भर्तृदारिकामन्तरेण । ]

कुरङ्गी—हं विदिदं रहस्सं । परिब्भट्ठम्हि । [ हं विदितं रहस्यम् ।
परिभ्रष्टास्मि । ]

६६ विलासिनी—हळा ! कहिं तुए सुदं । [ हला ! कुत्र त्वया श्रुतम् । ]

मागधिका—भट्टिणीपरिचारिआए वसुमित्ताए कहिदं । [ भट्टिनी-
परिचारिकया वसुमित्रया कथितम् । ]

६९ विलासिनी–सअं णाम भट्टिणीए कहिदं होदि । [ स्वयं नाम भट्टिन्या कथितं भवति । ]

मागधिका–अत्थि कासिराअपुत्तो जअवम्मा णाम । तस्स दिण्णा
७२ भट्टिदारिआ । तस्स अ दूदो आअदो महाराएण पूइदो । पडिग्गहिदं च वण्णिआरं । [ अस्ति काशिराजपुत्रो जयवर्मा नाम । तस्मै दत्ता भर्तृदारिका । तस्य च दूत आगतो महाराजेन पूजितः । प्रति-
७५ गृहीतं च वर्णिकारम् । ]

कुरङ्गी–( आत्मगतम् ) एदं अलिअं । अहं अत्तणो पभवामि । [ एतदलीकम् । अहमात्मनः प्रभवामि । ]

७८ मागधिका–तहिं किल भट्टिणीए भणिदं—बाला खु मे दुहिआ, ण सक्कुणोमि एक्कं पि दिअसं अपेक्खन्ती जीविदुं । जदि मे महाराओ पसण्णो, एत्थ एव्व जामादुओ आणिदव्वो त्ति । [ तत्र किल भट्टिन्या भणितं–बाला खलु मे दुहिता, न शक्नोम्येकमपि दिवसमपश्यन्ती जीवितुम् । यदि मे महाराजः प्रसन्नः, अत्रैव जामाता-नेतव्य इति । ]

८४ विलासिनी–तदो तदो । [ ततस्ततः । ]

मागधिका–तदो तं पि किल अणुमदं महाराएण । अज्ज णक्खत्तं सोभणं त्ति तेण अ दूदेण अमच्चो अज्जभूदिओ पत्थिदो । [ तत-
८७ स्तदपि किलानुमतं महाराजेन । अद्य नक्षत्रं शोभनमिति तेन च दूतेनामात्य आर्यभूतिकः प्रस्थितः । ]

कुरङ्गी–( स्वगतम् ) हन्त कालन्तरिदं कज्जं । [ हन्त कालान्तरितं
९० कार्यम् । ]

विलासिनी–पिअं भट्टिदारिआए रूवजोव्वणं सफलं संवुत्तं त्ति । [ प्रियं भर्तृदारिकाया रूपयौवनं सफलं संवृत्तमिति । ]

नलिनिका–णं सम्भावणीओ एसो । णं सो एव्व सो । [ ननु संभावनीय एषः । ननु स एव सः । ]

१२० कुरङ्गी–णलिणिए ! संवाहेहि मं । [ नलिनिके ! संवाहय माम् । ]

नलिनिका–जं भट्टिदारिआ आणवेदि । [ यद् भर्तृदारिकाज्ञापयति । ]

विलासिनी–णलिणिए ! विवाहो कदा भविस्सिदि । [ नलिनिके !

१२३ विवाहः कदा भविष्यति । ]

( नेपथ्ये )

अद्य ।

१२६ नलिनिका–चिरं जीव ।

( नेपथ्ये )

राजपुरुषाः ! अमात्यः प्रथित इति कश्चिदमात्यभृत्यः कन्यापु-

१२९ रक्षणार्थं नाम्यागतः । तद् यथेष्टं भवतु । तावदहं श्रो राज्ञो निवेदयिष्यामि ।

विलासिनी–हला णलिणिए ! किं भणिदं । [ हला नलिनिके ! किं

१३२ भणितम् । ]

नलिनिका–जदा मा भट्टिदारओ पविसदि, तदा होदि विवाहो । [ यदा ■ भर्तृदारकः प्रविशति, तदा भवति विवाहः । ]

१३५ विलासिनी–अविग्घेण पविसदु । [ अविघ्नेन प्रविशतु । ]

नलिनिका–एवं होदु । [ एवं भवतु ]

मागधिका–हला ! एहि चउस्साले उपविसामो । [ हला ! एहि

१३८ चतुःशाले उपविशामः । ]

विलासिनी–एवं होदु । गदप्पाओ पओसो । आरूढा जोह्ना । [ एवं भवतु । गतप्रायः प्रदोषः । आरूढा ज्योत्स्ना । ]

१४१ नलिनिका–हला ! मम वि अत्थरं अप्पेहि । [ हला ! ममाप्यास्तरमार्पय । ]

मागधिका—अत्थि अवआसो । सेवेहि भट्टिदारिअं, जाव णिद्दं
१४४ लभदि । [ अस्त्यवकाशः । सेवस्व भर्तृदारिकां, यावन्निद्रां लभते ]

नलिनिका—एवं होदु । [ एवं भवतु । ]

( उभे निष्क्रान्ते । )

१४७ ( ततः प्रविशति खड्गहस्तश्चोरवेषेण रज्जुहस्तोऽविमारकः )

अविमारकः—( सविमर्शम् ) भोः ! कष्टं तारुण्यं नाम । कुतः,

> रागं विजृम्भयति संभ्रमते प्रमादं
> दोषान् न चिन्तयति साहसमभ्युपैति ।
> स्वच्छन्दतो व्रजति नेच्छति नीतिमार्गं
> बुद्धिं शुभां सुविदुषामवशीकरोति ॥ १

कथमात्माधीनेष्वर्थेषु मन्दीभवामि । इह हि,

> नगरपरिचितोऽहं रक्षिणो ज्ञातसारा-
> स्तिमिरगहनभीमं वर्तते चार्धरात्रम् ।
> असिरपि सुसहायो निश्चितश्चान्तरात्मा
> किमिह बहुविचारैः को मया दुष्करोऽर्थः ॥ २ ॥

अहो अर्धरात्रस्य प्रतिभयता । सम्प्रति हि,

> गर्भस्था इव मोहमभ्युपगताः सर्वाः प्रजा निद्रया
> प्रासादाः सुरसुप्तनीरवजना ध्यानं प्रविष्टा इव ।
> प्रग्रस्ता इव सञ्चितेन तमसा स्पर्शानुमेया नगा
> अन्तर्धानमिवोपयाति सकलं प्रच्छन्नरूपं जगत् ॥ ३ ॥

अथैव खलु वर्तते कालरात्रिः ।

> तिमिरमिव वहन्ति मार्गनद्यः
> पुलिननिभाः प्रतिभान्ति हर्म्यमालाः ।
> तमसि दश दिशो निमग्नरूपाः
> प्लवतरणीय इवायमन्धकारः ॥ ४ ॥

( परिक्रम्य कर्णं दत्त्वा ) अये गान्धर्वध्वनिरिव श्रूयते । को नु खल्वयं सर्वकालसुखी पुरुषः कान्तया सह गान्धर्वमनुभवति । व्यक्तं
३ स्वयं वीणां वादयति । कुतः,

उच्चं हर्म्यं सन्निरुद्धाश्च जाला-
स्तन्त्रीनादः श्रूयते सानुनादम् ।
वाद्यस्थाने व्यक्तमेवं प्रयोक्तुं
किं सामर्थ्यं स्त्रीकराणाङ्गुलीनाम् ॥ ५ ॥

गीतं तु पुनः स्त्रियाः । इह हि,

तालस्तु मन्दो विशदप्रवृत्तो
जातश्च नादो मुरजाभिघेन ।
स्थूलोऽपि हेतुः करतालनादः
सञ्जायते सद्गलयस्यनेन ॥ ६ ॥

( परिक्रम्यावलोक्य ) हहह् अयमपरः कः क्रुद्धां कान्तां प्रसादयति । महान् खल्वस्यापराधः, येनेयमस्यां वेलायामपि न प्रसीदति ।
३ अथवा प्रमत्ता खल्वियं व्यपदेशमिच्छति । कुतः,

बाष्पोपरुद्धजडगद्गदजिह्मकण्ठं
काहं तवेयमकले प्रणयाद् वदन्ती ।
सद्भावतः प्रियतमं समुपागतापि
स्त्रीभावतः प्रवदति प्रतिकूलमेव ॥ ७ ॥

को नु खल्वयं पश्चाद् भैरवस्वरः । आः उलूकः खल्वयम् । कथं हसितमनेन । उलूकशब्दश्रवणभीतया कान्तया परिष्वक्तः खल्वयं तपस्वी ।
३ सदृशो वयसः । किं परव्यापारवीक्षणम् । साधयामस्तावत् । ( परिक्रम्य ) को नु खल्वयमस्मिन् नगरस्यालिन्दे सर्वाङ्गिन-गतिनिरोधं च सम्भावने । अस्मन्मन्त्राचार्यः खल्वयं तपस्वी ।

---

१ विमरस्यापारेण.

सम्पीड्यते परिजनेन शनैर्वदेति
संविग्नवद् भवति भूषणनिस्वनेन ।
सङ्गं वदत्यसुखदं मदनाभिभूतः
सङ्केतमिच्छति च नेच्छति चाभिगन्तुम् ॥ ८ ॥

(परिक्रम्य) अये ज्योत्स्ना । नैषा ज्योत्स्ना, उभयपङ्क्तिगतानां प्रासादानां गवाक्षान्तरगता दीपप्रभैषा । इह खलु प्रयत्नादात्मा रक्षितव्यः । अये अयं तु तस्करः । एष हि,

दृढपरिकरबन्धहृष्टचित्तः
परगृहवादनिविष्टदृष्टिचेष्टः ।
द्रुतगतिरपि दीपिकावलोकी
भवति च पादनिपातनादभीरुः ॥ ९ ॥

हन्त परिहरिष्याम्येनम् । (एकान्ते स्थितः) गतो नृशंसः । वयमपि तावत् प्रतिष्ठामहे । (परिक्रम्य) अये रक्षिणः खल्वेते । किन्त्विदानीं करिष्ये । भवतु दृष्टम् । इमां शृङ्गाटकस्थां विटसभां प्रविशामि । (विलङ्घ्य स्थित्वा)

आरक्षिणां [illegible] विमुखं मितविक्रमाणां
मामभ्युपेत्य हसतीव ममैव खड्गः ।
नैते [illegible] रक्षिपुरुषा मम भारभूता
मत्कार्यसाधनपरोऽहमिह प्रविष्टः ॥ १० ॥

गता रक्षिणः । के रक्षन्ति रक्षितात्मानम् ।

अयहुपुरुषपक्षमेत्य शौर्ये
निशि विचरन्ति महागलोभमोहाः ।
इह तु पुरुषकारसारसाक्षी
बहुविषयश्च सुखश्च रात्रिचारः ॥ ११ ॥

एतद् राजकुलम् । अहो स्थिरत्वमुच्छ्रितत्वं प्राकारस्य । इह रज्जु प्रयुज्यते पुरुषाणां कक्ष्याबन्धः । अथवा प्रविष्ट एवाहं चिन्तयितव्यः,
३ यदि स्थिराः कपिशीर्षकाः । इह स्थित्वा रज्जुं प्रक्षिपामि । नमः प्रजापतये । नमः सर्वसिद्धेभ्यः । प्रसीदन्तु बलिशाम्बरमहाकालाः । विजृम्भतां रात्रिः । वर्धतां निद्रा । अनुमन्यतां पथ्या । लयं गताः
६ सर्वविघ्ना भवन्तु । हताः परिपन्थिका भवन्तु । जयतु भगवती कात्यायनी । (रज्जुं क्षिप्त्वा) हन्त बद्धः कर्कटकरज्ज्वा कपिशीर्षकः । अहो भवितव्यस्य प्रभावः । एकेनैव क्षेपेण सुसंसक्तां रज्जुं कार्य-
९ सिद्धिमिव पश्यामि । अहो बलवान् हि भगवान् प्रजापतिः । कुतः,

> यत्ने कृते यदि न सिध्यति कोऽत्र दोषः
> को वा न सिध्यति ममेति करोति कार्यम् ।
> यत्नैः शुभैः पुरुषता भवतीह नॄणां
> दैवं-विधानमनुगच्छति कार्यसिद्धिः ॥ १८ ॥

भवतु रज्जुमवलम्ब्यारोहामि । (आरुह्य दृष्ट्वा) अहो राजकुलस्य श्रीः ।

> विपुलमपि मितोपमं विभागा-
> न्त्रिदिवमिवाभ्युदितं क्रमोच्छ्रयेण ।
> नृपभवनमिदं सहर्म्यमालं
> जिगमिषतीव नभो वसुन्धरायाः ॥ १९ ॥

इह तु न स्थातव्यम् । अट्टालप्रतोलीन्द्रपथेभ्यः सर्वविघ्ना भवन्ति ।
मवतु अनयैव रज्ज्वावतरिष्यामि । ( अवतीर्य ) कुत्रेदानीं
३ रज्जुं प्रच्छादयामि । ( विचिन्त्य ) भवतु दृष्टम् । अस्यां हस्ति-
शालायां पाशं छित्वा क्षिपामि । ( प्रक्षिपति । परिक्रम्य )

अये तन्त्रीनादो युवतिकलगीतध्वनियुतः
अन्यतो यास्यामि ।
अये गन्धामोदो गजवरमदोद्बोधितपटुः ।
मुहूर्तं स्थित्वा यास्यामि ।
प्रभैषा दीपानामिह तु वितता रक्षिपुरुषाः
का गतिः ।
चिराद् रात्रौ शान्तं मम कमलषण्डैर्नृपगृहम् ॥ १४ ॥

यास्यामि । एष तयोक्तो मार्गः । इयं मन्दाकिनी । असौ दारुपर्वतकः । इयमुपस्थानसभा । अये अयं कन्यापुरप्रासादः । एष तु काष्ठकर्मबहुलतया ममासन्नजालत्वाच्च सुखमारोढुम् । अथवा दुरारोहश्चेत्,

कान्तासमीपमुपगम्य मनोभिलाषा-
द्धर्म्याधिरोहणमतेर्मम का विशङ्का ।
संसक्तनालगतकण्टकभीतचेता-
स्तृष्णार्दितः क इह पुष्करिणीं जहाति ॥ १५ ॥

भवत्वारोहामि । ( आरुह्य ) इदं तयोक्तं जालयन्त्रम् । ( विघाट्य प्रविश्यावलोक्य च ) साधु कुन्तिभोज ! साधु । उपहसित इव भवनेनानेन स्वर्गः । तथाहि,

हंसाः स्वपन्ति मणिरत्नशिलातलेषु
वैडूर्यमौक्तिककृताः सिकताप्रतानाः ।
स्तम्भाः प्रवालविहिताः किमिह प्रलापै-
र्मन्दीभवन्ति मणिदीपहताः प्रदीपाः ॥ १६ ॥

अलं रौद्रवेषेण । ( चोरवेषमपनीय कक्ष्याबन्धं विमुञ्चति. )

---

१ ॰प्रधानाः.

नलिनिका–कोणुक्खु वुत्तन्तो भट्टिदारअस्स । भट्टिदारिआ वि अवत्थादुल्लहं णिद्दं लभदि अज्ज उ मम पिओ आअच्छदि त्ति सुदमत्तेण एव । [ कोनुखलु वृत्तान्तो भर्तृदारकस्य । भर्तृदारिकाप्यवस्थादुर्लभां निद्रां लभते अद्य तु मम प्रिय आगच्छतीति श्रुतमात्रेणैव । ]

अविमारकः–( श्रुत्वा सहसोपसृत्य ) भवति ! अयं मे वृत्तान्तः ।

नलिनिका–( विलोक्य सहर्षम् ) साअदं भट्टिदारअस्स । [ स्वागतं भर्तृदारकस्य । ]

अविमारकः–( दृष्ट्वा सानन्दम् ) इयमियं सा । यत्र मम,

दृष्टिर्न तृप्यति परिष्वजतीव साङ्गं
बुद्धिस्त्वरां व्रजति शोधयतीव सुप्ताम् ।
रागोऽभिचोदयति सादयतीव चाङ्गं
हर्षेण मम्रीद्गति विमुह्यति चान्तरात्मा ॥ १७ ॥

नलिनिका–( आत्मगतम् ) एसो क्खु भअवं कामदेवो ओघो विअ उभअपक्खं पीडेइ । ( प्रकाशम् ) भट्टिदारअ ! अलङ्करीअदु सअणअलं । [ एष खलु भगवान् कामदेव ओघ इवोभयपक्षं पीडयति । भर्तृदारक ! अलंक्रियतां शयनतलम् । ]

अविमारकः–बाढम् । ( उपविशति )

नलिनिका–भट्टिदारअ ! किं ओबोधेमि भट्टिदारिअं । [ भर्तृदारक ! किमवबोधयामि भर्तृदारिकाम् । ]

अविमारकः–भद्रे ! अलमलं बालचापलेन । पश्य,

अहं द्विनेत्रो न सहस्रनेत्रो
मतिश्च मूढा सुचिराभिलाषात्[1] ।
कामार्णवस्याद्य तु दृष्टपारं
चेच्छिद्यतां मे सुखमक्षियुग्मम् ॥ १८ ॥

---

1 °भिलाषा.

नलिनिका—जाणामि जाणामि भट्टिदारिअं अन्तरेण भट्टिदारअस्स परिस्समं । [ जानामि जानामि भर्तृदारिकामन्तरेण भर्तृदारकस्य
३ परिश्रमम् । ]

अविमारकः—अद्य सफलो मे परिश्रमः ।

कुरङ्गी—( बुद्ध्वा ) हला ! किं णिरणुक्कोसेण भणिअं । [ हला ! किं निरनुक्रोशेन भणितम् । ]
६

नलिनिका—भट्टिदारिए ! भणिदं खु मए पुढमं । [ भर्तृदारिके ! भणितं खलु मया प्रथमम् ]

९ अविमारकः—प्राप्तं खलु मया जीवितस्य फलं, येनेयमीदृशो मोहं गता ।

कुरङ्गी—( आत्मगतम् ) हं परिब्भट्ठम्हि । ( प्रकाशम् ) हला !
१२ किं मए भणिदं । [ हं परिभ्रष्टास्मि । हला ! किं मया भणितम् । ]

नलिनिका—भट्टिदारिए ! किञ्चि ण मन्तिदं । [ भर्तृदारिके ! किञ्चिन्न मन्त्रितम् । ]

१५ अविमारकः—अयमस्या मोहविस्तरेण द्वितीयो मे मोहः ।

कुरङ्गी—णलिणिए ! चिरं खु उपविट्ठा । का वेला । [ नलिनिके ! चिरं खलूपविष्टा । का वेला । ]

१८ नलिनिका—संवुत्तं अद्धरत्तं । [ संवृत्तोऽर्धरात्रः ]

कुरङ्गी—तेण हि परिस्सन्तासि । एहि परिस्सजेहि मं । [ तेन हि परिश्रान्तासि । एहि परिष्वजस्व माम् । ]

२१ नलिनिका—(अपवार्य) अहं संवाहेमि । भट्टिदारअ ! परिस्सजेहि भट्टिदारिअं । [ अहं संवाहयामि । भर्तृदारक ! परिष्वजस्व भर्तृदारिकाम् । ]

२४ अविमारकः–(सहर्षम्) बाढम् । एवमेव त्वमपि प्रियशतानि शृणु ।
कुरङ्गी–अज्ज अदिसिणेहेण । एहि दाव । [ अत्यतिस्नेहेन । एहि तावत् । ]

२७ नलिनिका–भट्टिदारिए ! इअम्हि । [ भर्तृदारिके ! इयमस्मि । ]
कुरङ्गी–(बलादाकृष्याविमारकमालिङ्गति) हं को दाणिं मं संवाहेदि । [ हं क इदानीं मां संवाहयति । ]

३० नलिनिका–(कर्णे) एवं विअ । [ एवमिव । ]
कुरङ्गी–(ससम्भ्रमम्) हा हीणं चारित्तं । भीदम्हि । [ हा हीनं चारित्रम् । भीतास्मि । ]

३३ अविमारकः–

न त्वं प्रिये ! मम नवासि मनोभियोगात्
किं कम्पसे पवनवेगहृता लतेव ।
भद्रे ! भयं त्यज कुरुष्व मयि प्रसादं
किं वा प्रलप्य बहुधा शरणागतोऽस्मि ॥ १९ ॥

(कुरङ्गी सलज्जं नलिनिकां विलोकयति)

नलिनिका–भट्टिदारअ ! उट्ठेहि उट्ठेहि । भट्टिदारिआ भणादि । उट्ठेहि किल । [ भर्तृदारक ! उत्तिष्ठोत्तिष्ठ । भर्तृदारिका भणति ।
३ उत्तिष्ठ किल । ]
अविमारकः–बाढम् । (उत्तिष्ठति)

(प्रविश्य)

६ धात्री–जेदु भट्टिदारओ । [ जयतु भर्तृदारकः । ]
अविमारकः–कथं भवती ।
धात्री–णलिणिए ! अब्भन्तरमण्डवे क्खु रइदं सअणं । भट्टिदारिअं
९ भट्टिदारअं च तहिं एव्व पवेसेहि । [ नलिनिके ! अभ्यन्तरमण्डपे खलु रचितं शयनम् । भर्तृदारिकां भर्तृदारकं च तत्रैव प्रवेशय । ]

नलिनिका—जाणामि जाणामि भट्टिदारिअं अन्तरेण भट्टिदारअस्स परिस्समं । [ जानामि जानामि भर्तृदारिकामन्तरेण भर्तृदारकस्य
३ परिश्रमम् । ]

अविमारकः—अद्य सफलो मे परिश्रमः ।

कुरङ्गी—( बुद्ध्वा ) हला ! किं णिरणुक्कोसेण भणिअं । [ हला ! किं निरनुक्रोशेन भणितम् । ]
६
नलिनिका—भट्टिदारिए ! भणिदं खु मए पुढमं । [ भर्तृदारिके ! भणितं खलु मया प्रथमम् ]

९ अविमारकः—प्राप्तं खलु मया जीवितस्य फलं, येनेयमीदृशं मोहं गता ।

कुरङ्गी—( आत्मगतम् ) हं परिब्भट्ठम्हि । ( प्रकाशम् ) हला !
१२ किं मए भणिदं । [ हं परिभ्रष्टास्मि । हला ! किं मया भणितम् । ]

नलिनिका—भट्टिदारिए ! किञ्चि ण मन्तिदं । [ भर्तृदारिके ! किञ्चिन्न मन्त्रितम् । ]

१५ अविमारकः—अयमस्या मोहविस्तरेण द्वितीयो मे मोहः ।

कुरङ्गी—णलिणिए ! चिरं खु उवविट्ठा । का वेला । [ नलिनिके ! चिरं खलूपविष्टा । का वेला । ]

१८ नलिनिका—संवुत्तं अद्धरत्तं । [ संवृत्तोऽर्धरात्रः ]

कुरङ्गी—तेण हि परिस्सन्तासि । एहि परिस्सजेहि मं । [ तेन हि परिश्रान्तास्मि । एहि परिष्वजस्व माम् । ]

२१ नलिनिका—(अपवार्य) अहं संवाहेमि । भट्टिदारअ ! परिस्सजेहि भट्टिदारिअं । [ अहं संवाहयामि । भर्तृदारक ! परिष्वजस्व भर्तृदारिकाम् । ]

२४ अविमारकः—(सहर्षम्) बाढम् । एवमेव त्वमपि प्रियशतानि शृणु ।
कुरङ्गी—अलं अदिसिणेहेण । णहि दाव । [ अलमतिस्नेहेन । नहि तावत् । ]
२७ नलिनिका—भट्टिदारिए ! इअम्हि । [ भर्तृदारिके ! इयमस्मि । ]
कुरङ्गी—( सत्रासादाकृष्याविमारकमालिङ्गति ) हं को दाणिं मं संवाहेदि । [ हं क इदानीं मां संवाहयति । ]
३० नलिनिका—( कर्णे ) एवं विअ । [ एवमिव । ]
कुरङ्गी—( ससम्भ्रमम् ) हा हीणं चारित्तं । भीदम्हि । [ हा हीनं चारित्रम् । भीतास्मि । ]
३१ अविमारकः—

न त्वं प्रिये ! मम नवासि मनोभियोगात्
किं कम्पसे पवनवेगहता लतेव ।
भद्रे ! भयं त्यज कुरुष्व मयि प्रसादं
किं वा प्रलप्य बहुधा शरणागतोऽस्मि ॥ १९ ॥
( कुरङ्गी सलज्जं नलिनिकां विलोकयति )

नलिनिका—भट्टिदारअ ! उट्ठेहि उट्ठेहि । भट्टिदारिआ भणादि । उट्ठेहि किल । [ भर्तृदारक ! उत्तिष्ठोत्तिष्ठ । भर्तृदारिका भणति ।
३ उत्तिष्ठ किल । ]
अविमारकः—बाढम् । ( उत्तिष्ठति )

( प्रविश्य )

६ धात्री—जेदु भट्टिदारओ । [ जयतु भर्तृदारकः । ]
अविमारकः—कथं भवती ।
धात्री—णलिणिए ! अब्भन्तरमण्डवे खु रइदं सअणं । भट्टिदारिअं
९ भट्टिदारअं च तहिं एव्व पवेसेहि । [ नलिनिके ! अभ्यन्तरमण्डपे खलु रचितं शयनम् । भर्तृदारिकां भर्तृदारकं च तत्रैव प्रवेशय । ]

नलिनिका—तह। [ तथा। ]

१२ ( निष्क्रान्ता धात्री )

नलिनिका—भट्टिदारअ! अब्भन्तरमण्डवे खु रइदं सअणं। तहिं एव पविसदु भट्टिदारिआए सह। [ भर्तृदारक!, अभ्यन्तरमण्डपे खलु

१५ रचितं शयनम्। तत्रैव प्रविशतु भर्तृदारिकया सह। ]

अविमारकः—त्वमप्येवं प्रियशतानि शृणु। ( हस्तेन तस्या हस्त गृहीत्वोत्तिष्ठति। )

१८ नलिनिका—एदु एदु भट्टिदारओ। [ एत्वेतु भर्तृदारकः। ]

अविमारकः—अयमयमागच्छामि।

( उभौ परिकामतः )

२१ अविमारकः—( सहर्षम् ) अनृणोऽस्मि यौवनस्य। कुतः,

नेत्रे बाष्पपरिप्लुते करधृतौ श्यावल्लामानौ स्तनौ
श्रोणी चाधिकभारिका न विशदौ पादौ ह्रियां स्यन्दिनौ।
एतन्मन्मथपद्मप्रमाणमिह भोः! सम्पाद्यते योजना
यद्येषा क्षणदा भवेद् युगशतं धन्यो मदन्य कुतः॥ २०॥

( निष्क्रान्ताः सर्वे )

तृतीयोऽङ्कः।

## अथ चतुर्थोऽङ्कः।

( ततः प्रविशति चाङ्गेरिकाहस्ता मागधिका )

३ मागधिका—अहो परिजणस्स पमादो। आसुय्योदए पि ण किदा पासादरअणा। ण सुणीअदि गोट्ठीजणकोलाहलो। किंणुखु भवे। आ, रत्तिजागरदाए पभादप्पसुत्ता भवे। जाव भट्टिदारिअं ओबो-

६ धेमि। ( परिकामति ) [ अहो परिजनस्य प्रमादः। आसूर्योदयमपि न कृता प्रासादरचना। न श्रूयते गोष्ठीजनकोलाहलः। किंनुखलु

- भवेत् । अ, रात्रिजागरतया प्रभातप्रसुप्ता भवेत् । यावद् भर्तृदारिका-
९ मवबोधयामि । ]

(ततः प्रविशति विलासिनी वीजनेन)

विलासिनी–मागधिए ! चिट्ठ चिट्ठ । [ मागधिके ! तिष्ठ तिष्ठ । ]

१२ मागधिका–हळा ! मा वारेहि । भट्टिदारिआए सुमणाकण्णअं मए
आणीअदि । [ हला ! मा वारय । भर्तृदारिकायै सुमनाकर्णकं
मया नीयते । ]

१५ विलासिनी–किं भट्टिदारिआए सुमणाकण्णएण वा अलङ्कारेण वा ।
[ किं भर्तृदारिकायाः सुमनाकर्णकेन वालङ्कारेण वा । ] [४०-४]

मागधिका–अविणीदे ! मा अमङ्गलं भणाहि । सदालङ्किदा भट्टि-
१८ दारिआ होदु । [ अविनीते ! मा अमङ्गलं भण । सततालङ्कृता
भर्तृदारिका भवतु । ]

विलासिनी–ण खु । आइदी एव भट्टिदारिआए अलङ्कारो त्ति
२१ भणामि । [ न खलु । आकृतिरेव भर्तृदारिकाया अलङ्कार इति भणामि । ]

मागधिका–उम्मात्तिए ! णणु पुप्फं वि वासीअदि । [ उन्मत्तिके !
ननु पुष्पमपि वास्यते । ]

२४ विलासिनी–सदिसं एदं । सभावरमणीआणि मण्डिदाणि अदिर-
मणीआणि होन्ति । [ सदृशमेतत् । स्वभावरमणीयानि मण्डिता-
न्यतिरमणीयानि भवन्ति । ]

२७ मागधिका–हळा ! सुजोजिदो खु भट्टिदारिआए रूवाणुरूवो भत्ता ।
[ हला ! सुयोजितः खलु भर्तृदारिकाया रूपानुरूपो भर्ता । ]

विलासिनी–अलं पक्खवादेण । भट्टिदारअस्स समीवे भट्टिदारिआ
३० पदुमिणिआ विअ दिस्सदि । [ अलं पक्षपातेन । भर्तृदारकस्य समीपे
भर्तृदारिका पद्मिनीव दृश्यते । ]

मागधिका–मुद्दु भणादि । अहं वि चिन्तेमि—ससरीरो भअवं

मागधिका—हला ! किं पुच्छसि । णं मण्डणवेळा भट्टिदारिआए ।
— [ हला ! किं पृच्छसि । ननु मण्डनवेला भर्तृदारिकायाः । ]

६० नलिनिका—अदिक्कन्दो उस्सवो । (रोदिति) [अतिक्रान्त उत्सवः ।]

उभे—सिविणं विअ किं एदं । भणाहि भमाणा भवामो । [स्वप्न इव किमेतत् । भण भ्रमाना भवामः । ]

६३ नलिनिका—सव्वहा गओ भट्टिदारओ । [सर्वथा गतो भर्तृदारकः ।]

उभे—हं ।

नलिनिका—अहं पि भट्टिदारिआए दुक्खं पेक्खिदुं असहन्ती इह
६६ आअदम्हि । [ अहमपि भर्तृदारिकाया दुःखं प्रेक्षितुमसहमानेहागतास्मि । ]

मागधिका—ण सक्कं खु भट्टिदारिआए अवत्थादंसणं । तह वि
६९ भट्टिदारिअं अस्सासइस्सामो । [ न शक्यं खलु भर्तृदारिकाया अवस्थादर्शनम् । तथापि भर्तृदारिकामाश्वासयिष्यामः । ]

उभे—एवं करेम्ह । [ एवं कुर्मः । ]

७२ (सर्वा निष्क्रान्ताः)

प्रवेशकः ।

—

( ततः प्रविशत्यविमारकः )

अविमारकः—( सशोकम् )

कन्यापुरात् कथमपीह विनिर्गतं मे
भाग्यावशेषमवलम्ब्य शरीरमात्रम् ।
अद्यापि तन्मम मनो न तु मामुपैति
नावेक्षते मयि तया प्रिययावरुद्धम् ॥ १ ॥

कानुखलु भवेदवस्था कुरङ्गयाः ।

दूता भवेत् प्रेष्यजनप्रवादैर्भीता च राज्ञा दृढसन्निरुद्धा ।
बाष्पाविला मामनवेक्षमाणा मोहं व्रजेद् रात्रिषु किं करिष्ये ॥२॥

हन्त दृष्टः प्रतीकारः । तथापि तावदस्मदपेक्षया नापेक्षित आत्मा । तस्मादहमपि तावत् तदर्थे प्राणान् परित्यजामि । (परिक्रम्य) कतिपयदिवसप्रोषितोऽहमस्मि । अद्य तु मानसं शारीरं च दुःखमसह्यमिव मे प्रतिभाति । इह हि,

निर्व्याजं परिचयवर्धमानरागां
रूपाढ्यामभिनवयौवनां मनोज्ञाम् ।
त्यक्त्वा तां क्षणमपि वञ्चितोऽस्मि जीवन्
कष्टोऽन्यः क इह भवेत् कृतप्रमादः ॥ ३ ॥

सम्प्रति हि मदनेनान्तर्दह्यमानस्य क्षारीभवितुमारब्धो भगवान् सूर्यः सहस्ररश्मिः । (सर्वतो विलोक्य) अहो प्रतिभयता निदाघस्य । सम्प्रति हि,

अत्युष्णा ज्वरितेव भास्करकरैरापीतसारा मही
यक्ष्मार्ता इव पादपाः प्रमुषितच्छाया दवाग्न्याश्रयात् ।
विक्रोशन्त्यवशादिवोत्कृतगुहाव्यात्ताननाः पर्वता
लोकोऽयं रविपाकनष्टहृदयः संयाति मूर्छामिव ॥ ४ ॥

किमिदानीं करिष्ये । न चास्म्यहं गन्तुं समर्थः । कुतः,

लिम्पन्ति रूक्षपवनाः सिकताग्निचूर्णैः
संस्वेदयन्ति च नगाः परुषैः पलाशैः ।
दावैर्विरूक्षतनुः स्रवतीव भास्वा-
नादित्यपाकचलितः क्वथतीव लोकः ॥ ५ ॥

हा प्रिये! हा सुन्दरि! देहि मे प्रतिवचनम् । (मूर्छां नाटयति । पुनर्निःश्वस्य । ऊर्ध्वमवलोक्य) मद्धः खलु भगवान् सूर्यः सहस्र-
रश्मिः । अथवा,

किमत्र चित्रं विततैः पयोदैः
रुन्धन्ति सूर्यं ननु वारिनीवाः ।
अन्तःस्थिते मे यदि वारयन्ति
कामं भवेद् विस्मयनीयमेतत् ॥ ६ ॥

किमनेन जीवन्मरणेन । विसर्जयिष्याम्यात्मानम् । ( उत्थाय परिक्रामति ) किन्नुखलु करिष्ये । भवतु दृष्टम् । अस्मिन्नारण्यतटाके विसर्जयिष्याम्यात्मानम् । धिगधर्मः खलु मरणमार्गः । अभिमानमोहान्महापथो विस्मृतः । अन्यथा प्रयतिष्ये । ( विलोक्य ) भवतु दृष्टम् । अये अदूरे दृश्यते ज्वाग्निः । तस्मिन् प्राणानाहुतिं करिष्यामि । ( उपगम्य प्रणम्य च ) भगवन् ! अग्ने !

इष्टं चेदेकचित्तानां यशाग्निः साधयिष्यति ।
परत्रापि च मे कान्ता सा भवेदेककीर्तनी ॥ ७ ॥

( अग्निं प्रविश्य सकुतूहलम् ) किमिदं वर्तते ।

दग्धाः स्फुलिङ्गनिवहैर्निपतन्ति वृक्षा
ज्वालाश्च मे मलयचन्दनपङ्कशीताः ।
अग्निर्दयां हि कुरुते मदनातुरेऽति 
पुत्रं पितेव च परिष्वजति प्रहृष्टः ॥ ८ ॥

भोः ! किमतः परं विस्मयनीयम् । अग्निः खलु मां न दहति । अथवा एतदप्यस्तिकारणम् । अन्यथा प्रयतिष्ये ( परिक्रम्य ) एष खलु महान् पर्वतः,

असितजलदवृन्दैर्मिश्रसन्दिग्धशृङ्गो
गगनचरकुलानां विश्रमस्थानभूतः ।
सुकविमतिविचित्रो मित्रसंयोगहृद्यो
नरपतिरिव नीचो दृश्यते निष्फलाढ्यः ॥ ९ ॥

भवतु तावदस्मिञ्छैले प्राणान् परित्यजामि । मरुत्प्रपातो हि सर्वार्थसाधकः । यावदारोहामि । ( आरुह्यावलोक्य ) एतत् पार्श्वे गोत्रस्थं स्नात्वोपस्पृश्य मन्त्रं जपामि । ( तथा कृत्वा जपति )

( ततः प्रविशति विद्याधरः सह प्रियया )

विद्याधरः–

प्राक्सन्ध्या कुरुषूत्तरेषु गमिता स्नातः पुनर्मानसे
भूयो मन्दरकन्दरान्तरतटेष्वामोदितं यौवनम् ।
क्रीडार्थं हिमवद्गुहासु चरिता दृष्टिश्च संलोभिता
याम्याशो मलयस्य चन्दननगान्मध्याह्ननिद्रासुखात् ॥ १० ॥

(आकाशयानं निरूप्य) सौदामनि ! पश्य पश्य भगवत्या वसुन्धराया दूरस्थां दर्शनीयामाकृतिम् । इह हि,

शैलेन्द्राः कलशोपमा जलधयः क्रीडातटाकोपमा
वृक्षाः शैवलसन्निभाः क्षितितलं प्रच्छन्ननिम्नस्थलम् ।
सीमन्ता इव निम्नगाः सुविपुलाः सौधाश्च बिन्दूपमा
दृष्टं चक्रमिवाभिभाति सकलं संक्षिप्तरूपं जगत् ॥ ११ ॥

भद्रे ! अवहिता भव । शीतचन्दननिलयं मलयं प्रयास्यावः ।

सौदामनी–अय्य ! तह । [ आर्य ! तथा । ]

३ ( उभावाकाशयानं निरूपयतः )

सौदामनी–अय्य ! ण पारेमि अविस्समन्ता गन्तुं । [ आर्य । न पारयाम्यविश्रान्ता गन्तुम् । ]

६ विद्याधरः–तेन हि कस्मिंश्चित् पर्वते मुहूर्तं विश्रम्य गमिष्यावः ।

सौदामनी–अय्य ! पिअं मे । [ आर्य ! प्रियं मे । ]

( उभाववतरतः )

९ विद्याधरः–सौदामनि ! पश्य पश्य ।

जलदगहनमुज्झतीव वेगा-
दभिपततीव मही समुद्रमुद्रा ।
जलदसमयतोयदा इवामी
भ्रममभिभान्ति नगा विजृम्भमाणाः ॥ १२ ॥

भवति ! अयं पर्वतः समर्थ इवास्माकं मुहूर्तमातिथ्यं कर्तुम् । तस्माद् विश्रान्तौ गमिष्यावः ।

३ सौदामनी–अय्य ! एवं करेम्ह । [ आर्य ! एवं कुर्वः । ]

विद्याधरः–सौदामनि ! पुष्पितानां नगानां षड्भागग्रहणमस्माकं धर्मः । तस्मादनृणान् वृक्षान् करिष्यावः ।

६ सौदामनी–अय्य ! तह । [ आर्य ! तथा । ]

( पुष्पापचयं नाटयतः )

विद्याधरः–( अविमारकं विलोक्य ) अये कौतुकमल्पयम् । आ ज्ञातम् ।

९ विद्याधरः खलु मन्त्रभ्रष्टः । कुतः, रूपमीदृशं हि नान्येषाम् । दिष्ट्या यदयं दृष्टः । भवत्वहमपि विस्मृतं पृच्छामि ।

अविमारकः–भवतु कृतं देवकार्यम् । प्रपतामि । ( पार्श्वतो विलोक्य,

१२ विद्याधरं दृष्ट्वा ) भोः ! कौतुकमल्पयम् । अथवा, स्वप्नोऽयं भवेत् । न ह्ययं सुप्तः । आ अन्तकाले मनुष्याः किमपि पश्यन्ति । तदेतत् स्यात् । तदपि संमूढानां खलु । अहं तु सर्वं जानामि । भवतु

१५ पृच्छाम्येनम् । भोः ! कतरकुलान्वयो भवनालङ्क्रियते ।

विद्याधरः–श्रूयताम्– ' अहं मेघनादो नाम विद्याधरः । इयं तावदस्मत्कुटुम्बिनी सौदामनी नाम । अद्य भगवन्तमगस्त्यमारा-

१८ धयितुं मलयपर्वते विद्याधरैरुत्सवः प्रारब्धः । तत्र वयमपि सङ्केतिताः । इह मुहूर्तं विश्रम्य गमिष्याव इत्यवतीर्णौ । एषोऽस्माकं वृत्तान्तः । अथ किमर्थमिदानीं भवान् क्षितितलं देवलोकीकरोति ।

२१ अविमारकः–( आत्मगतम् ) किन्नुखलु वक्तव्यम् । वर्तमाने ममान्तकालेऽनृतं न वक्तव्यम् । ( प्रकाशम् ) भोः ! सौवीरराजपुत्रोऽविमारको नामास्मि ।

२४ विद्याधरः–( आत्मगतम् ) एतदनृतम् । नेयमाकृतिर्मानुषी । ( प्रकाशम् ) अथ किमर्थमेकाकी भवानिहागतः ।

अविमारकः–( आत्मगतम् ) किन्नु खलु वक्ष्यामि । ( अधोमुखस्तिष्ठति )

२७ विद्याधरः–( आत्मगतम् ) भवत्वहमेव ज्ञास्यामि । ( विद्यामावर्तयति ) भोः ! कष्टम् । अयं खलु भगवतोऽग्नेः पुत्र आत्मानं न जानाति, कुन्तिभोजदुहितरं कुरङ्गीमभिलषमाणो रममाणश्च तत्र विदिते

३० सति निर्गतः, पुनः प्रवेशोपायमलभमानः प्राणपरित्यागाभिलाषी महाप्रपातं कर्तुमिहारूढः । सापि च तत्र जीवन्मरणमनुभवति । अहमस्यास्मिन् कार्ये सहायो भविष्यामि । ( प्रकाशम् ) भो

३३ अविमारक ! अच्छलं मित्रत्वं नाम । न शक्नोमि मया विदितमर्थं प्रच्छादयितुम् ।

अविमारकः–उच्यताम् ।

३६ विद्याधरः–अद्यप्रभृत्यावयोः सख्यमस्तु । सकला च भवतोऽस्माभिर्वस्था विदिता । प्राणपरित्यागार्थमिहारूढो भवान् ननु ।

अविमारकः–वयस्य ! एवमेतत् ।

३९ विद्याधरः–भोः ! प्रीतोऽस्म्यनेन विस्रम्भेण । यदि तत्राज्ञातमेव प्रवेष्टुं स्यादुपायः, किं करिष्यति भवान् ।

अविमारकः–( सदर्पम् ) किमन्यत् । अनुप्रवेक्ष्यामि । तदर्थो हि

४२ व्याक्षेपः ।

विद्याधरः–तेन हि सखे ! दृश्यतामङ्गुलीयम् । ( इत्यङ्गुलीयकं दर्शयति )

४५ अविमारकः–वयस्य ! किमनेन प्रयोजनम् ।

विद्याधरः–एतदङ्गुलीयकं दक्षिणाङ्गुल्या धारयन्नदृश्यो भवति, वामेन प्रकृतिस्थः ।

४८ अविमारकः–वयस्य ! एतदप्यस्ति ।

विद्याधरः–अयं ते प्रत्ययं करिष्यामि । वयस्य ! किं मां पश्यसि ।

अविमारकः–एवम् ।

५१ विद्याधरः–अवहितो भव ।

अविमारकः–अवहितोऽस्मि ।

विद्याधरः–( दक्षिणाङ्गुल्यां प्रक्षिप्य ) वयस्य ! किं मां पश्यसि ।

५४ अविमारकः–वयस्य ! छायापि न दृश्यते, किं पुनः शरीरम् । एते खलु लोके सुखिनो नाम ।

ये सञ्चरन्ति गगने वनितासहायाः
क्रीडन्ति पर्वततटेषु कृतोपदेशाः ।
सर्वं विदन्त्यपि च मन्त्रकृतैः प्रभावै-
रन्तर्हिताश्च विवृताश्च सुखं भ्रमन्ति ॥ १३ ॥

भवतु, प्रविष्ट एवास्म्यनेन ।

विद्याधरः–( वामाङ्गुल्या प्रक्षिप्य ) तेन हि गृह्यतामङ्गुलीयकम् ।

२ अविमारकः–(प्रतिगृह्य) अनुगृहीतोऽस्मि ।

विद्याधरः–न न, अहमेवानुगृहीतः । कुतः,

न तथा रत्नमासाद्य सुजनः परितुष्यति ।
यथा तन् तद्गताकाङ्क्षे पात्रे दत्त्वा प्रहृष्यति ॥ १४ ॥

अविमारकः–एकस्तु मे संशयः । मम शरीरे परीक्षितुमिति वस्तुमसदृशमिव ।

५ विद्याधरः–तेन हि प्रक्षिप दक्षिणाङ्गुल्याम् ।

अविमारकः–बाढम् । ( तथा करोति )

विद्याधरः–वयस्य ! गृह्यतामसिः ।

६ अविमारकः–बाढम् । ( खड्गं गृहीत्वा सविस्मयम् ) अहो खड्गस्य प्रभावः ।

> प्रच्छन्नरूपस्त्वशनिः कथञ्चित्
> खड्गीकृतः स्यात्तु तडित्कलापः ।
> निर्भर्त्सयन् सूर्यकरां प्रभाभि-
> र्वने दवाग्निः सहसाभ्युपैति ॥ १५ ॥

विद्याधरः–अहो वीर्यमग्निपुत्रस्य । अस्य खड्गस्य प्रभावं विद्याधरेष्वपि कतिचित् सहन्ते । अग्निः खलु भगवानिमं रक्षति ।

३ अविमारकः–( खड्गे दृष्ट्वा ) अहो भगवतीनां विद्यानां प्रभावः ।

> दिव्यं स्वभावं समुपागतोऽस्मि
> स एष नामास्मि गुणैर्विशिष्टः ।
> इदं यदा निर्गुणमर्त्यवृन्दै-
> र्न ज्ञायते चास्ति च मे शरीरम् ॥ १६ ॥

वयस्य ! कृतमस्मत्कार्यम् । गृह्यतामसिः ।

विद्याधरः–यदिष्टं भवतः । वयस्य! अन्तर्हितश्चान्तर्हितगृहश्च

३ तत्स्पृष्टश्चान्तर्हिता भवन्तीति निश्चयः ।

अविमारकः–सखे ! प्रीतोऽस्मि । अयमभ्युदयादभ्युदयः । सखे! अस्मदपेक्षया विलम्बितमिति तर्कयामि । मा भूदिदानीं

६ वेलातिक्रमः ।

विद्याधरः–प्रविष्टोऽस्मि, यथापृष्टो भवान् ।

अविमारकः- किं बहुना भाषितेन ।

> विद्यावशानां तु भवद्विधानां
> कोऽस्मद्विधः स्यात् प्रविकर्तुकामः

क्रीतोऽस्म्यहं जीवितसम्प्रदानात्
प्रशाधि मां किं करवाणि भृत्यः ॥ १७ ॥

विद्याधरः—जानाम्यहं भवतोऽच्छलां बुद्धिम् । यदि च भवानस्मद्वचनमनुवर्तते,

मत्कृते मम प्रतिनिवेद्य मामिमां च
त्वं मामनुस्मर सखे ! गतिरीक्ष्यतां मे ।
क्रीडारसैः प्रतिविलोभय राजपुत्रीं
कार्यान्तरेषु पुनरप्यहमस्मि पार्श्वे ॥ १८ ॥

अहो पुरुषसारो हि नाम नेच्छति विसर्जयितुं मे मनः । वयस्य ! गच्छामस्तावत् ।

अविमारकः—गच्छतु भवान् पुनर्दर्शनाय ।

विद्याधरः—बाढम् ।

( उत्थितो विद्याधरः सह प्रियया )

अविमारकः—( ऊर्ध्वमवलोक्य ) एष हि तत्रभवान् मेघनादो गगनार्णवमवगाढः । य एषः,

वातोद्धूतापकेशः सलिलधरदरीमृष्टदृष्टाङ्गरागः
सम्यग्बद्धासिकक्ष्यः प्रिययुवतिकरस्पृष्टमत्रूढमध्यः ।
वातोद्धूतोत्तरीयो मुकुटमणिगणैस्तारकाः सम्प्रमृद्नन्
श्रीमान् विद्याधरोऽसावुपरिगतिजवैः क्षीयमाण. प्रयाति ॥ १९ ॥

इयमपि विद्याबलेन प्रियमनुवर्तते । यैषा,

जवशिथिलविमुक्तपार्श्वकेशी
स्तनतटवल्गनाचित्रमत्रमध्या ।
वियति दयितदत्तपूर्वकाया
तडिदिव तोयधरेषु सम्प्रनष्टा ॥ २० ॥

गतस्तत्रभवान् मेघनादः। अहमप्येवं नगराभिमुखो भविष्यामि। यावदवतरामि। (अवतीर्य) परिश्रान्त इवास्मि। भवतु, एत-
३ स्मिन् शिलातले मुहूर्तं विश्रम्य गमिष्यामि। (उपविशति।)

(ततः प्रविशति विदूषकः।)

विदूषकः—अहो तत्तहोदो सुगहीदणामहेअस्स सोवीरराअस्स
६ अधण्णदा, जाए चिरं अपुत्तो भविअ असणो णिअमविसे-
सेण देव्वप्पसादेण अ माणुसलोअदुल्लभं सुपुत्तं लभिअ पुणो
वि तादिसो एव संवुत्तो। सव्वहा मम अ समत्तजीविददाए
९ बन्धुजणस्स अधण्णदाए परिब्भट्ठो कुमारो। (परिक्रम्य) अज्ज
खु तत्तहोदीए भणिदं—खेमेण गदो कुमारो त्ति। अहव को एत्थ
जाणादि अदिसुउमारो राअउमारो एआई अम्महेण अभिताडि-
१२ अमाणो परिब्भट्ठो कुसलो होदि त्ति। अहं वि कुमारं वा कुमा-
रस्स सरीरं वा पेक्खिस्सामि दाव सव्वलोअं परिब्भमिअ।
जदि ण पेक्खामि, तत्तहोदो परत्त सहाओ होमि। परिस्सन्तो
१५ खु अहं। भोदु, एदस्सिं पादपच्छाआअं मुहुत्तअं विस्समिअ
गमिस्सं। (स्वपिति) [अहो तत्रभवतः सुगृहीतनामधेयस्य
सौवीरराजस्याधन्यता, यथा चिरमपुत्रो भूत्वात्मनो नियमविशेषेण
१८ दैवप्रसादेन च मानुषलोकदुर्लभं सुपुत्रं लब्ध्वा पुनरपि तादृश एव
संवृत्तः। सर्वथा मम च समाप्तजीविततया बन्धुजनस्याधन्यतया
परिभ्रष्टः कुमारः। अद्य खलु तत्रभवत्या भणितं—क्षेमेण गतः कुमार
२१ इति। अथवा कोऽत्र जानाति अतिसुकुमारो राजकुमार एकाकी मन्म-
थेनाभिताड्यमानः परिभ्रष्टः कुशलो भवतीति। अहमपि कुमारं वा
कुमारस्य शरीरं वा प्रेक्षिष्ये तावत् सर्वलोकं परिभ्रम्य। यदि न प्रेक्षे,
२४ तत्रभवतः परत्र सहायो भवामि। परिश्रान्तः खल्वहम्। भवतु,
एतस्यां पादपच्छायायां मुहूर्तकं विश्रम्य गमिष्यामि।]

अविमारकः—कानुखलु सन्तुष्टस्यावस्था । सुष्ठु भवेद् यदि मे
१७ निर्गमनं तेन श्रुतं, न श्रुतं चेद् विपत्स्यते स ब्राह्मणः । अथवा
किं मम सर्वारम्भैस्तेन विना । स हि,

गोष्ठीषु हास्यः समरेषु योधः
शोके गुरुः साहसिकः परेषु ।
महोत्सवो मे हृदि किं प्रलापै-
र्द्विधा विभक्तं खलु मे शरीरम् ॥ २१ ॥

(सर्वतो विलोक्य) अये कोनुखलु च्छायायामध्वगः प्रसुप्तः ।
(उपेत्य) अभ्युदयो मे हृदयस्य यदृच्छयागतः । त्वरते मे मनः
३ परिष्वक्तुमेनम् ।

विदूषकः—(बुद्ध्वा) चिरं खु सुत्तम्हि । जाव गच्छामि । को
विस्समो णाम विब्भट्ठमणोरहाणं । (परिक्रम्याविमारकं विलोक्य)
६ कहं तत्तभवं अविमारओ । [चिरं खलु सुप्तोऽस्मि । यावद्
गच्छामि । को विश्रमो नाम विभ्रष्टमनोरथानाम् । कथं तत्रभवान्
अविमारकः । ]

९ अविमारकः—अये वयस्यः सन्तुष्टः ।

(उभौ परिष्वजेते)

विदूषकः—(उच्चैर्विहस्य) भो वअस्स! कहेहि कहेहि एत्तिअं
१२ कालं किं तुए किदं । [भो वयस्य! कथय कथयैतावन्तं कालं
किं त्वया कृतम् । ]

अविमारकः—वयस्य! एतत् कृतम् । (अङ्गुलीयकं दक्षिणाङ्गुल्यां
१५ प्रक्षिप्य तिरस्कृतः । )

विदूषकः—हा हा कहिं कहिं तत्तभवं । कहं ण दिस्सदि । आ
तस्सिं गदाए चिन्ताए तं विअ पेक्खामि । अहव फुडीकरिस्सं ।

१८ भो वअस्स ! सावेण साविदो सि, जदि अत्ताणं छादेसि । [ हा हा क क तत्रभवान् । कथं न दृश्यते । आ तस्मिन् गतया चिन्तया तमिव पश्यामि । अथवा स्फुटीकरिष्यामि । भो वयस्य ! शापेन
२१ शापितोऽसि, यद्यात्मानं छादयसि । ]

अविमारकः—वयस्य ! अयमस्मि ।

विदूषकः—कहिं कहिं सि । [ क्वासि । ]

२४ अविमारकः—(वामाङ्गुल्यामङ्गुलीयकं प्रक्षिप्य) वयस्य ! अयमस्मि ।

विदूषकः—पुढमं सुद्धो अविमारओ, इदाणिं माआविमारओ संवुत्तो । एवं माआवित्तअ ! किस्स तुवं कण्णाउरे पच्छण्णरूवो
२७ ण चरसि । [ प्रथमं शुद्धोऽविमारकः, इदानीं मायाविमारकः संवृत्तः । एवं मायाविक्तक ! कस्मात् त्वं कन्यापुरे प्रच्छन्नरूपो न चरसि ।]

अविमारकः—वयस्य ! इदानीं खल्वेतदुपलब्धम् ।

३० विदूषकः—अच्चरीअं अच्चरीअं । कुदो दाणिं एदस्स आगमो । [ आश्चर्यमाश्चर्यम् । कुत इदानीमेतस्यागमः । ]

अविमारकः—सर्वमन्तःपुरे कथयिष्यामि ।

३३ विदूषकः—सम्पदि बुभुक्खिदो सि । [ संप्रति बुभुक्षितोऽसि । ]

अविमारकः—वैधेय ! शीघ्रमागच्छ प्रक्षेपभूमिप्रवेशाय । नैवायं हस्तो मोचयितव्यः ।

३६ विदूषकः—अच्चरीअं अच्चरीअं । अहं पि दाव अदिस्सो । मम सरीरं अत्थि वा णत्थि वा । उच्छिट्ठं करिस्सं । थु थु । [ आश्चर्यमाश्चर्यम् । अहमपि तावददृश्यः । मम शरीरमस्ति वा नास्ति वा ।
३९ उच्छिष्टं करिष्यामि । थु थु । ]

अविमारकः—मूर्ख ! अलमलं विलंबितेन । त्वरते मे मनः कान्तादर्शनाय । ( आकर्षति )

४२ विदूषकः—ण मे सद्धा । [ न मे श्रद्धा । ]

अविमारकः—हन्त भोजनवेलां प्रतिपालयामि ।

विदूषकः—कञ्चि कालं विस्समिअ गमिस्सामो । [ कंचित् कालं
४५ विश्रम्य गमिष्यावः । ]

अविमारकः—किं न स्मरति मां कुरङ्गी ।

विदूषकः—किण्णुखु जीवदि णगन्धस्समणिआ । [ किंनुखलु जीवति
४८ नग्नान्धश्रमणिका । ]

अविमारकः—वयस्य ! याचे भवन्तं, शीघ्रमागम्यताम् ।

विदूषकः—किस्स तुवं किदसमावुत्तो वडुओ विअ तुवरसि ।
५१ [ कस्मात् त्वं कृतसमावर्तो वटुक इव त्वरसे । ]

अविमारकः—मूर्ख ! इतस्तावत् ।

विदूषकः—मा कड्ढेहि, अअं अणुधावामि । [ मा कर्ष, अयम
५४ नुधावामि । ]

अविमारकः—( परिक्रम्य ) एतन्नगरम् ।

विदूषकः—पेक्खामि दाव णअरस्स सोहं । [ पश्यामि तावन्नगरस्य
५७ शोभाम् । ]

अविमारकः—इदं राजकुलम् ।

एतन्नरेन्द्रभवनं निशि जातशङ्को
यत् साहसं समुपलभ्य तथा प्रविष्टः ।
भूयस्तदेव दिवसे सुसहायमायो
वृन्दं सतामिव पटुः प्रविशाम्यशङ्कः ॥ २२ ॥

(परिक्रम्य) इदानीं प्रासादे ख्यातयाभ्यन्तरस्थया कुरङ्गया भवित-
व्यम् ।

३ विदूषकः—जहिं वा तहिं वा पविसामो । अदिक्कमदि भिक्खवेळा ।
[ यत्र वा तत्र वा प्रविशावः । अतिक्रामति भिक्षावेला । ]

अविमारकः—एहि तावदभ्यन्तरमेव प्रविशावः । (प्रविश्य) इह हि,

पुरे गृहे वापि पुरा सुयोषितै-
मनस्विभिर्दुर्लभचिन्तयागतैः ।
पुनः कृतार्थैर्मुदितान्तरात्मभिः
सुखे प्रवेष्टुं सविशेषकर्मभिः ॥ २३ ॥

( निष्क्रान्तौ )

चतुर्थोऽङ्कः ।

---

## अथ पञ्चमोऽङ्कः ।

( ततः प्रविशति कुरङ्गी नलिनिका च )

१ नलिनिका—भट्टिदारिए ! अलं सन्दावेण । कण्णाउरप्पासादं आलुहिअ दिट्ठिविलोभणं करिस्सामो । [ भर्तृदारिके ! अलं सन्तापेन । कन्यापुरप्रासादमारुह्य दृष्टिविलोभनं करिष्यावः । ]

६ कुरङ्गी—हला ! किं तुए मम हिअअं परिण्णादं । एत्थ हि अजाणन्तेण परिजणेण मम परितोसणिमित्तं बउलसरल-सज्जज्जुणकदम्बणीविणिउलप्पहुदीणि मेहकालवल्लहाणि परम-

९ सुरहीणि आणीअमाणाणि मं उम्मादअन्ति । अह अ इमे मोरा अम्हाअं राअउलमाणसे अदिपीठमद्दभावं करन्ति । अम्हेहि सद्दलाळिदा वि अदेसकालब्भदाए अत्तणो अहि-

१२ कब्भभावं दंसेदि । सुअसारिआ वि वक्खाणं एव्व कहेदुं आरद्धा । मम णिव्वेदभावं अजाणन्ती मुदिअसारिआ वि सव्वलोअवुत्तन्तं कहइस्सामि त्ति आअदा । मम रोआवत्थं पुच्छिदुं आअदो

१५ परिजणो मं णिब्बन्धिअ णिवेदेदि । ता इच्छामि मुहुत्तअं पासादे अच्छिदुं । [ हला ! किं त्वया मम हृदयं परिज्ञातम् । अत्र

ह्यजानता परिजनेन मम परितोषनिमित्तं बकुलसरलसर्जार्जुनकदम्बनीप-
१८ निचुलप्रभृतीनि मेघकालवल्लभानि परमसुरभीण्यानीयमानानि मामुन्मा-
दयन्ति । अथ चेमे मयूरा अस्माकं राजकुलमानसे अतिशीळमर्दभावं
कुर्वन्ति । अस्माभिः सततलालिता अप्यदेशकालज्ञतयागमनोऽधिकक्षमियं
२१ दर्शयन्ति । शुकसारिकापि व्याख्यानमेव कथयितुमारब्धा । मम
निर्वेदभावमजानन्ती भूतिकसारिकापि सर्वलोकवृत्तान्तं कथयिष्यामी-
त्यागता । मम रोगावस्थां प्रथममागतः परिजनो मां निर्बध्य निवेदयति ।
२४ नदिच्छामि मुहूर्तकं प्रासादे आसितुम् । ]

नलिनिका–जं भट्टिदारिआए रुइदं ! होदु । [ यद् भर्तृदारिकायै रुचितम् । भवतु । ]

२७ ( उभे आरोहतः । )

कुरङ्गी–हला ! एत्थ वि महन्तो अणत्थो उट्ठिदो विज्जुप्पदीवं धारिअ काळमेहो । [ हला ! अत्रापि महाननर्थ उत्थितः विद्युत्प्रदी-
३० पं धृत्वा कालमेघः । ]

नलिनिका–भट्टिदारिए ! अलं उक्कण्ठिदेण । पेक्ख पेक्ख णवस-
ळिळधरळुसुप्पं पविरळजळणिवाददस्सणीअं गअणअळं ।
३३ [ भर्तृदारिके ! अलमुत्कण्ठितेन । पश्य पश्य नवसलिलधररुद्धसूर्यं
प्रविरलजलनिपातदर्शनीयं गगनतलम् । ]

कुरङ्गी–पेक्खामि अ रमणीअं आआसं । [ पश्यामि च रमणीय-
३६ माकाशम् । ]

( ततः प्रविशत्यविमारको विदूषकश्च )

अविमारकः–वयस्य ! दृष्टा सा कुरङ्गी । यथा,

रोगादकालागुरुचन्दनार्द्रा
विमुक्तभूषा गतहावभावा ।

